अग्नौ प्राप्ताहुतिः सम्यगादित्यः सुप्रतिष्ठते ।
आदित्याज्जायते वृष्टिः···· ··· ॥ इत्यादि ।

अत्र श्लोकस्य पूर्वार्द्धे वर्णितानां यज्ञविषयकाणां विचाराणामुपस्थापनं वृष्टेः भौतिक-पौराणिक-पक्षयोर्विवेचन-प्रसङ्गे करिष्यते ।

छान्दोग्योपनिषदः शाङ्करभाष्ये जलस्य तेजोयोनित्ववर्णनप्रसङ्गे वृष्टेरपि तेजोयोनित्वं वर्णितम् । अत्र तेजः सूर्यतेजः सूर्योष्मा वेति । तथाहि--

एतद्[1] वायुमागृह्याकाशमभितपति तदाऽऽहुर्निशोचति नितपति वर्षिष्यति वा इति । तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते, तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्लादाश्चरन्ति, तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा । यस्मादब्योनिस्तेजस्तस्मात् तद् वा, एतत्तेजो वायुमागृह्यावष्टभ्य, स्वात्मना निश्चलीकृत्य, वायुमाकाशमभिव्याप्नुवत्तपति यदा, तदाहुर्लौकिका निशोचति सन्तपति सामान्येन जगन्नितपति देहान् अतो वर्षिष्यति वा इति । इत्यादि ।

इत्थं प्राच्यभारतीये संस्कृतवाङ्मये वर्णिता वृष्टिपद्धतिः पाश्चात्यवैज्ञानिकैर्वर्णिताया वृष्टिपद्धत्याः सर्वथा अभिन्ना परं गूढतरं वैज्ञानिकं रहस्यमावहति । अत्रत्येषु वर्णनेषु जलयोनिभूतस्य ऑक्सीजनेत्याख्यस्य वायव्यतत्त्वस्य सूर्योद्भूतत्त्वं यद् वर्ण्यते तत्सर्वथा युक्तियुक्तम्, आधुनिकवैज्ञानिकानां कृते विचारणीयञ्च वर्तते ।

## वृष्टिगर्भविवेचनम्--

यदा सन्तप्तो वायुः पर्याप्तां जलवाष्पमात्रामादाय सुसम्पृक्तो भवति तदैव भुवो वायुमण्डले वृष्टिकारिणां मेघानामुत्पत्तिर्जायते, वृष्टिश्च भवति । यदा तु वायौ जलवाष्पस्य सम्पृक्तिक्षमा मात्रा धृता न भवति तदा केवलमवर्षिणां मेघानां विविधानि रूपाणि सृज्यन्ते । यया वायुसम्पृक्त्यर्हया जलवाष्पमात्रया वायुधृतया वर्षुका मेघा जायन्ते तस्या जलवाष्पमात्राया वायौ धारणं वृष्टिगर्भधारणमित्युच्यते । अस्यैव वृष्टिगर्भस्य विवेचनमत्रोपन्यस्यते । वराहमिहिरेण स्वीये वृहत्संहिताग्रन्थे गर्भलक्षणाध्याये वृष्टिगर्भविषये गर्ग-वृद्धगर्ग-काश्यप-पराशर-वात्स्य-वज्र-सिद्धसेन-प्रभृतीनां प्राच्यानां मुनीनामाचार्याणाञ्च मतानि समुपन्यस्तानि । तथा हि :—

[2]तल्लक्षणानि मुनिभिर्यानि निबद्धानि तानि दृष्ट्वेदम् ।
क्रियते गर्ग-पराशर-काश्यप-वज्रादिरचितानि ॥

---

१. छान्दोग्योपनिषत् ।७।११।१॥ शाङ्करभाष्यम् ॥
२. वृहत्संहिता । गर्भलक्षणाध्यायः । श्लो० २ ॥

## वृष्टिगर्भाधानस्य प्रमुखः कालः —

यद्यपि यस्मिन् कस्मिन्नपि काले समुचितं तापक्रममासाद्य वृष्टिगर्भस्याधानं सम्भवति परं सामान्यतश्चातुर्मास्ये वर्षर्तौ वर्षिणां मेघगर्भाणामाधानं कार्तिक-शुक्लपक्षानन्तरं भवति। अत्र प्राच्यानां विविधानि मतानि सन्ति। तथा हि सिद्धसेनमते—

[1]शुक्लपक्षमतिक्रम्य कार्तिकस्य विचारयेत्।
गर्भाणां सम्भवं सम्यक् सस्यसम्पत्तिकारणम्॥

परं गर्ग-काश्यपादीनां मुनीनामन्येषाञ्च प्राच्यविदुषां बहुमतो वृष्टिगर्भस्या-धानकालस्तु मार्गशीर्षस्य शुक्लपक्षे, चन्द्रे पूर्वाषाढनक्षत्रगते भवति। तथा हि गर्गमतम्—

[2]शुक्लादौ मार्गशीर्षस्य पूर्वाषाढव्यवस्थिते।
निशाकरे तु गर्भाणां तत्रादौ लक्षणं वदेत्॥

विषयेऽस्मिन् काश्यपमतमपि समानमेव। तथा हि—

[3]सितादौ मार्गशीर्षस्य प्रतिपद्दिवसे तथा।
पूर्वाषाढगते चन्द्रे गर्भाणां धारणं भवेत्॥

## वृष्टिगर्भस्य विपाकावधिः —

प्रायो यन्नक्षत्रोपगते चन्द्रे यस्य वृष्टिगर्भस्य धारणं भवति पुनस्तन्नक्षत्रोपगते चन्द्रे १९५ सौरदिवसानन्तरं तस्य वृष्टिगर्भस्य प्रसवकालोऽभ्येति, वृष्टिश्च भवति। तथा हि—

[4]यन्नक्षत्रमुपगते गर्भश्चन्द्रे भवेत्स चन्द्रवशात्।
पञ्चनवते दिनशते तत्रैव प्रसवमायाति॥

अत्र तत्रैवेत्यस्य तस्मिन्नेव नक्षत्रे इत्याशयः। इत्थञ्च वृष्टिगर्भस्य विपाकावधिः सामान्यतः सार्द्धषण्मासमितो भवति।

---

१. अत्रैव। पञ्चमश्लोकानन्तरमुद्धृतं वचनम्॥
२. अत्रैवोद्धृतं गर्गवचनम्। ( भट्टोत्पलटीकायाम् )
३. अत्रैवोद्धृतं काश्यपवचनम्। ( भट्टोत्पलटीकायाम् )
४. अत्रैव। श्लो० ७॥

**वृष्टिगर्भाणां प्रसवकालः —**

शुक्लपक्षे धृतो वृष्टिगर्भः कृष्णपक्षे वर्षति, कृष्णपक्षे धृतो वृष्टिगर्भः शुक्लपक्षे, दिवा धृतो वृष्टिगर्भो निशि, निशि धृतो वृष्टिगर्भश्च दिवा वर्षति। सन्ध्यायां धृतो वृष्टिगर्भस्तु सन्ध्याविपर्ययेण सन्ध्यायामेव प्रसवमेति। तथा हि—

[1]सितपक्षभवाः कृष्णे, शुक्ले कृष्णाः, द्युसम्भवा रात्रौ।
नक्तं प्रभवाश्चाहनि, सन्ध्याजाताश्च सन्ध्यायाम्॥

विषयोऽयमत्रैवोद्धृतेन गर्गमतेनाधिकं सुस्पष्टतामेति। तथा हि भट्टोत्पलेनोद्धृतं गर्गवचनम्—

[2]दिवा भवति यो गर्भो रात्रौ स इति पच्यते।
शुक्लपक्षे समुद्भूतः कृष्णे पक्षे च वर्षति॥
पौर्णमास्यामथोत्पन्नः सोऽमावास्यां प्रवर्षति।
अमावास्यां समुद्भूतः पूर्णमास्यां प्रवर्षति॥
पूर्वसन्ध्यासमुद्भूतः पश्चिमायां प्रवर्षति।
पश्चिमायां समुद्भूतः पूर्वसन्ध्यां प्रवर्षति॥
पूर्वार्द्धे यः समुद्भूतः पश्चाद्रात्रौ प्रवर्षति।
निशायां पश्चिमे यश्च स पूर्वाह्णे प्रसूयते॥
दिनार्द्धे तु समुत्पन्नः स निशार्द्धे प्रसूयते॥ इति॥

इत्थमुक्तं कालविपर्ययमनुसृत्य तेषां तेषां मासानां तेषु तेषु पक्षेषु धृतानां वृष्टिगर्भाणां प्रसवकालो वराहमिहिरेण स्वीये बृहत्संहिताग्रन्थे गर्भलक्षणाध्याये वर्णितः। तथा हि—

[3]मृगशीर्षाद्या गर्भा मन्दफलाः पौषशुक्लजाताश्च।
पौषस्य कृष्णपक्षेण निर्दिशेच्छ्रावणस्य सितम्॥
माघसितोत्था गर्भाः श्रावणकृष्णे प्रसूतिमायान्ति।
माघस्य कृष्णपक्षेण निर्दिशेद् भाद्रपदशुक्लम्॥

---

१. उक्तस्थले। श्लो० ८॥
२. अत्रैवाद्धृतं गर्गवचनम्॥ (भट्टोत्पलटीका)
३. बृहत्संहिता। गर्भलक्षणाध्यायः। श्लो० ९-१२॥

फाल्गुनशुक्लसमुत्था भाद्रपदस्यासिते विनिर्देश्याः ।
तस्यैव कृष्णपक्षोद्भवास्तु ये तेऽश्वयुक्-शुक्ले ॥
चैत्रसितपक्षजाताः कृष्णेऽश्वयुजस्य वारिदा गर्भाः ।
चैत्रासितसम्भूताः कार्तिकशुक्लेऽभिवर्षन्ति ॥

विषयेऽस्मिन् गर्गमतमपि तावद् द्रष्टव्यम्—

[1]माघेन श्रावणं विन्द्यान्नभस्यं फाल्गुनेन तु ।
चैत्रेणाश्वयुजं प्राहुर्वैशाखेन तु कार्तिकम् ॥
शुक्लपक्षेण कृष्णं तु कृष्णपक्षेण चेतरम् ।
रात्र्यह्नोश्च विपर्यासात् कार्यः काले विनिश्चयः ॥ इति ॥

अत्र पराशरमतमपि प्रायः समानमेव । तथा हि—

[2]अथमाघेन श्रावणं, फाल्गुनेन भाद्रपदं, चैत्रेणाश्वयुजम्, वैशाखेन तु कार्तिकं, शुक्लेन कृष्णं, कृष्णेन शुक्लम्, दिवसेन रात्रिं, रात्र्या दिवसं गर्भाः प्रवर्षन्ति ॥ इति ॥

## वृष्टिगर्भाणां वर्षणे दिग्विपर्ययो वायुविपर्ययश्च–

यथा हि वृष्टिगर्भाः पक्ष–दिवस–निशा–सन्ध्यादीनां विपर्ययेण वर्षन्ति तथैव वृष्टिगर्भाणां वर्षणे दिग्विपर्ययो वायुविपर्ययश्चापि भवतः । तद्यथा पूर्वस्यां दिशि धृता वृष्टिगर्भाः पश्चिमायाम्, पश्चिमायां दिशि धृता वृष्टिगर्भाश्च पूर्वस्यां दिशि वर्षन्ति । इत्थमेव अन्यासु दिक्ष्वपि धृता वृष्टिगर्भा दिग्विपर्ययेण वर्षन्ति । वृष्टिगर्भाणां वर्षणे यथा दिग्विपर्ययो भवति तथैव वायुविपर्ययोऽपि भवति । तद्यथा पूर्ववायौ धृता वृष्टिगर्भाः पश्चिमवायौ वर्षन्ति । इत्थमेवेतरदिग्गामिषु वायुष्वपि ज्ञेयम् । तथा हि—

[3]पूर्वोद्भूताः पश्चादपरोत्थाः प्राग्भवन्ति जीमूताः ।
शेषास्वपि दिक्ष्वेवं विपर्ययो भवति वायोश्च ॥

## वृष्टिगर्भस्याधानचिह्नानि—

यदा पृथिव्या वायुमण्डले क्षेत्रविशेषे वृष्टिगर्भो धृतो भवति तदा तस्य क्षेत्रस्य वायुमण्डले, आकाशे च विविधलक्षणानि दृश्यन्ते । लक्षणैरेतैस्तत्क्षेत्रवर्तिनो मनुष्य-

---

१. अत्रैवोद्धृतं गर्गवचनम् ॥ ( भट्टोत्पलटीका )
२. अत्रैवोद्धृतं पराशरवचनम् । ( भट्टोत्पलटीका )
३. बृहत्संहिता । गर्भलक्षणाध्यायः । श्लो० १३ ॥

पशुपक्षिणोऽपि प्रभाविता भवन्ति। एभ्यः प्रभावलक्षणादिभ्यो वृष्टिगर्भस्य ज्ञानं भवति। वृष्टिगर्भलक्षणानामेतेषां वर्णनं वराहमिहिरेण स्वीये वृहत्संहिताग्रन्थे[1] कृतम्। तथा हि वृष्टिगर्भकाले—

ह्लादिमृदूदक्शिवशक्रदिग्भवो मारुतो वियद् विमलम्।
स्निग्धसितबहुपरिवेष परिवृतौ हिममयूखार्कौ॥
पृथुबहुलस्निग्धघनं घनसूचीक्षुरकलोहिताभ्रयुतम्।
काकाण्डमेचकाभं वियद्विशुद्धेन्दुनक्षत्रम्॥
सुरचापमन्द्रगर्जितविद्युत्प्रतिसूर्यका शुभा सन्ध्या।
शशिशिवशक्राशास्थाः शान्तरवाः पक्षिमृगसंघाः॥
विपुलाः प्रदक्षिणचराः स्निग्धमयूखा ग्रहा निरुपसर्गाः।
तरवश्च निरुपसृष्टाङ्कुरा नरचतुष्पदा हृष्टाः॥

विषयोऽयं [2]समाससंहितायामपि वर्णित उपलभ्यते। तथा हि—

पृथुघनबहुला जलदा जलचरसत्वान्विताः शुभाः गर्भाः।
स्निग्ध-सितबहुल-परिवेष-परिवृत्तौ हिमकरोष्णकरौ।
नृ-खग-मृगा मुदिता निरुपहतास्तरवः।
वियदमलं च यदा भवति तदा सुसमा॥
स्निग्धतडित्प्रतिसूर्यक-मत्स्य-शक्रधनुः प्रथमापरमध्ये।
शान्तरवा-मृग-पक्षि-मनुष्याः शक्रशशीश्वरदिक्पवनाश्च॥

## वृष्टिगर्भपोषकाणि नक्षत्राणि--

वृष्टिगर्भस्याधानकालिकनक्षत्रमादाय गर्भस्य साफल्यासाफल्यविषये प्राच्यैः पर्यवेक्षणानि कृतानि। पर्यवेक्षणानामेतेषां फलं ग्रन्थेषु वर्णितमुपलभ्यते। पर्यवेक्षणेभ्यः प्राच्यैर्ज्ञातं यद् पूर्वाभाद्रपदोत्तराभाद्रपद-पूर्वाषाढोत्तराषाढ-रोहिणी-नक्षत्रेषु धृतो गर्भो विविधैरुपघातैर्मुक्तो भवति। तथा हि—

[3]भाद्रपदाद्वयविश्वाम्बुदेवपैतामहेष्वथर्क्षेषु।
सर्वेष्वृतुषु विवृद्धो गर्भो बहुतोयदो भवति॥

---

१. वृहत्संहिता। गर्भलक्षणाध्यायः। श्लो० १४-१७॥

२. अत्रैव २४तम श्लोकानन्तरमुद्धृतम्॥ (भट्टोत्पलटीका)

३. अत्रैव। श्लो० २८॥

## वृष्टिगर्भविघातकानि नक्षत्राणि—

यथा वृष्टिगर्भ-पोषकाणां तथैव वृष्टिगर्भविघातकानां नक्षत्राणामपि निर्देशः प्राच्यैः कृतः । प्राच्यानां मते शतभिषगाश्लेषाऽऽर्द्रा–स्वातिमघानक्षत्रेषु धृतो गर्भो विनश्यति । तथा हि—

[1]शतभिषगाश्लेषार्द्रा-स्वातिमघासंयुतो शुभो गर्भः ।
पुष्णाति बहून् दिवसान् हन्त्युत्पातैर्हतस्त्रिविधैः ॥

प्रसङ्गेऽस्मिन् गर्गमतमपि तावद् द्रष्टव्यम् । तथाहि—

[2]प्राजापत्यं मघाश्लेषा रौद्रं चानिलवारुणम् ।
आषाढाद्वितयं चैव तथा भाद्रपदाद्वयम् ॥
नक्षत्रदशकं चैतद्यदि स्याद् ग्रहदूषितम् ।
न गर्भाः सम्पदं यान्ति योगक्षेमं न कल्पते ॥
उल्कयाभिहतं वाऽपि केतुना वाऽप्यधिष्ठितम् ।
न गर्भाः सम्पदं यान्ति वासवश्च न वर्षति ॥

## आधानकाले वृष्टिगर्भस्य साफल्यासाफल्यचिह्नानि—

वृष्टि-गर्भस्याधानकाले परिलक्षितेभ्यो लक्षणविशेषेभ्यो ज्ञातुं शक्यते यद् धृतो गर्भः साफल्यमेष्यति न वा । वृष्टिगर्भस्याधानकाले पवन–मेघ–मेघगर्जन–विद्युत्-शीकरवर्षणादीनां पञ्चलक्षणानां दर्शनं वृष्टिगर्भस्य साफल्यं सूचयति । परं वृष्टिगर्भस्याधानकाले विपुलावृष्टिः वृष्टिगर्भस्यासाफल्यं सूचयति । लक्षणानामेतेषां वर्णनं वराहमिहिरेण स्वग्रन्थे कृतम् । तथा हि—

[3]पवन–सलिल–विद्युद्–गर्जिताभ्रान्वितो यः,
स भवति बहुतोयः पञ्चरूपाभ्युपेतः ।
विसृजति यदि तोयं गर्भकालेऽति भूरि,
प्रसवसमयमित्वा शीकराम्भः करोति ॥

---

१. अत्रैव । श्लो० २६ ॥
२. अत्रैवोद्धृतम् ॥ (भट्टोत्पलटीका)
३. अत्रैव । श्लो० ३७ ॥

**आधानकाले वृष्टिगर्भोपघातचिह्नानि–**

[१]गर्भसमयेऽतिवृष्टिर्गर्भाभावाय निर्निमित्तकृता ।
द्रोणाष्टांशेऽभ्यधिके वृष्टे गर्भः स्रुतो भवति ॥

अत्र निर्निमित्तकृता इत्यस्य वृष्टिनिमित्तं विना जाता अतिवृष्टिरित्यर्थो बोध्यः । वृष्टिनिमित्तानि तावद् ग्रहाणामुदयास्त–योग–सङ्क्रमणादीनि तथा हि—

[२]प्रायो ग्रहाणामुदयास्तकाले समागमे मण्डलसङ्क्रमे च ।
पक्षक्षये तीक्ष्णकरायनान्ते वृष्टिर्गतेऽर्के नियमेन चान्द्रौ ॥ इति ॥

अत्रोक्तानां वृष्टिगर्भोपघातकानामुत्पानां यत् त्रैविध्यमुक्तं तदत्रैवोद्धृतात् समाससंहितावचनात् स्पष्टतामेति । तथा हि—

[३]दिव्यं ग्रहर्क्षजातं भुवि भौमं स्थिरचरोद्भवं यच्च ।
दिग्दाहोल्कामारुतपरिवेषाद्यं वियत्प्रभवम् ॥ इति ॥

प्रसङ्गेऽस्मिन् गर्गमतमपि तावदवलोकनीयम् । तथा हि—

[४]अश्मवर्षं तमोवर्षं मांसशोणितवर्षणम् ।
उल्कानिर्घातकम्पश्च वज्रपातस्तथैव च ॥
परिवेषाः परिधयो वासवस्य धनूंषि च ।
अनभ्रस्तनितं वर्षं दिशां दाहस्तथैव च ॥
अनार्तवं पुष्पफलं वारणीयेषु वर्षणम् ।
ग्रहयुद्धेषु घोरेषु हतान् गर्भान् विनिर्दिशेत् ॥ इति ॥

अत्रैवोद्धृतं पराशरवचनमपि सदृशमेव । तथा हि—

[५]तेषां ग्रहाणामुदयास्तमयोल्कानिर्घाताशनिपातगन्धर्वनगरदिग्दाहार्करश्मिवर्णविकारभूचलनप्रादुर्भावो वर्षास्ववर्षणाय ॥ इति ॥

---

१. बृहत्संहिता । गर्भलक्षणाध्यायः । श्लो० ३४ ॥
२. अत्रैवोद्धृतम् ॥ ( भट्टोत्पलटीका )
३. अत्रैवोद्धृतम् ॥ ( भट्टोत्पलटीका )
४. अत्रैवोद्धृतम् ॥ ( " )
५. अत्रैवोद्धृतम् ॥ ( " )

## तत्तदृतुषु वृष्टिगर्भपुष्टिचिह्नानि—

प्राच्यैः वृष्टिगर्भस्य धारणादनन्तरं वर्षणं यावत् तस्य पुष्टिलक्षणानां विघातलक्षणानां च सम्यगध्ययनं कृतम्। लक्षणानामेतेषां विशदं वर्णनं तत्तन्मासेषु वृष्टिगर्भलक्षणानां वर्णनप्रसङ्गे करिष्यते परं यानि तु तत्तदृतुषु वृष्टिगर्भपुष्टेः सूचकानि सामान्यलक्षणानि तेषां वर्णनमत्र क्रियते। तथा हि वराहमिहिरमते—

[1]पौषे समार्गशीर्षे सन्ध्यारागोऽम्बुदाः सपरिवेषाः।
नात्यर्थं मृगशीर्षे शीतं पौषेऽतिहिमपातः॥
माघे प्रबलो वायुस्तुषारकलुषद्युती रविशशाङ्कौ।
अतिशीतं सघनस्य च भानोरस्तोदयौ धन्यौ॥
फाल्गुनमासे रूक्षश्चण्डः पवनोऽभ्रसम्प्लवाः स्निग्धाः॥
परिवेषाश्चासकलाः कपिलस्ताम्रो रविश्च शुभः।
पवनघनवृष्टियुक्ताश्चैत्रे गर्भाः शुभाः सपरिवेषाः।
घन पवनसलिलविद्युत्स्तनितैश्च हिताय वैशाखे

मुनिना काश्यपेनापि तेषु तेषु मासेषु वृष्टिगर्भपुष्टिलक्षणानि वर्णितानि। तथा हि—

[2]शीतमभ्रं तथा वायुश्चन्द्रार्कपरिवेषणम्।
माघे मासि परीक्षेत श्रावणे वृष्टिमादिशेत्॥
फाल्गुने चात्र सङ्घातं वृष्टिस्तनितमेव च।
पुरो वाताश्च ये प्रोक्ता मासि भाद्रपदे शुभम्॥
बहु पुष्पफला वृक्षा वाताः शर्करवर्षिणः।
शीतवर्षं तथाभ्राणि चैत्रेणाश्वयुजं वदेत्॥
वहन्ति मृदवो वाताः पुरः शीघ्रं प्रदक्षिणाः।
वैशाखे तानि रूपाणि कार्तिके मासि वर्षति॥ इति॥

प्रसङ्गेऽस्मिन् भट्टोत्पलेन स्वटीकायां समाससंहिताग्रन्थादप्युद्धरणमुपन्यस्तम्। अत्रापि संक्षेपेण वृष्टिगर्भपुष्टिलक्षणानि कथितानि। तथा हि—

---

१. बृहत्संहिता। गर्भलक्षणाध्यायः। श्लो० १६–२२॥
२. उक्तस्थले काश्यपवचनम्॥ (भट्टोत्पलटीका)

[१]शस्तानि मृगान्मासाच्छीतहिमवायुमेघकृतानि ।
स्तनिततडिज्जलमारुतघनतापान्यतिशयं तु वैशाखे ॥
कृष्णेन शुक्लपक्षः सितेन कृष्णो निशा दिनोत्थेन ।
रात्र्याहः सन्ध्यायां सन्ध्यादिग्व्यत्ययाज्जलदाः ॥ इति ॥

**तत्तदृतुषु वृष्टिगर्भोपघातचिह्नानि—**

यानि तत्तदृतुषु वृष्टि-गर्भपुष्टिलक्षणानि पूर्वं वर्णितानि तद्विपरीतानि लक्षणानि तत्तदृतुषु वृष्टिगर्भोपघातं सूचयन्ति । तथा हि—

[२]स्वर्तुस्वभावजनितैः सामान्यैर्यैश्च लक्षणैर्वृद्धिः ।
गर्भाणां विपरीतैस्तैरेव विपर्ययो भवति ॥

**तत्तन्मासेषु धृतानां वृष्टिगर्भाणां वर्षणक्षमता—**

कस्मिन् मासे धृतो वृष्टिगर्भः कियद् वर्षतीत्यस्यापि वर्णनं प्राच्यैः कृतम् । तथा हि--

[३]मृगमासादिष्वष्टौ षट् षोडश विंशतिश्चतुर्युक्ता ।
विंशतिरथ दिवसत्रयमेकतमर्क्षेण पञ्चभ्यः ॥

प्रसङ्गेऽस्मिन् ऋषिपुत्रवचनमपि तावद् द्रष्टव्यम्---

[४]माघे षोडश संख्यास्तु षोडशाष्टौ च फाल्गुने ।
विंशतिश्चैत्रमासे तु त्रयश्चैन्द्राग्निदैवते ॥
अष्टौ सौम्येऽथ षट् पौषे संख्यास्तासु च वर्षति ॥ इति ॥

**वृष्टिगर्भकालिकपञ्चलक्षणेभ्यो वृष्टिगर्भस्य वर्षणक्षमताज्ञानम्—**

वृष्टिगर्भस्याधानकाले द्रष्टभ्यः पवन-मेघ-गर्जन-विद्युत्-शीकर वृष्टिप्रभृतिभ्यः पञ्चलक्षणेभ्योऽपि धृतस्य वृष्टिगर्भस्य वर्षणक्षमता ज्ञाता भवति । तथाहि--

---

१. पूर्वस्थले समाससंहितावचनम् ॥
२. बृहत्संहिता । गर्भलक्षणाध्यायः ॥ श्लो० २७ ॥
३. बृ० सं० । गर्भलक्षणाध्यायः । श्लो० ३० ॥
४. अत्रैवोद्धृतम् ॥ ( भट्टोत्पलटीकायाम् )

[1]पञ्चनिमित्तैः शतयोजनं पदर्द्धार्द्धमेकहान्यातः ।
वर्षति पञ्चनिमित्ताद् रूपेणैकेन :यो गर्भः ॥
द्रोणः पञ्चनिमित्ते गर्भे त्रीण्याढकानि पवनेन ।
षड् विद्युता नवाभ्रैः स्तनितेन द्वादश प्रसवे ॥

प्रसङ्गेऽस्मिन् वृद्धगर्गमतमपि तावद् द्रष्टव्यम् । तथा हि—

[2]वाते तु आढकं विन्द्यात् स्तनिते द्वादशाढकम् ।
नवाढकं तथाभ्रेषु द्योतितेषु षडाढकम् ॥
निमित्तपञ्चकोपेते द्रोणं वर्षति वासवः ॥

**पल-आढक-द्रोणाख्यानि वृष्टिपरिमाणानि—**

प्राच्यैः पल-आढक-द्रोणप्रभृतीनि वृष्टिपरिमाणानि वर्णितानि । अत्र परिमाण-विशेषपरिच्छिन्नं पात्रं गर्तं वा कृत्वा वृष्टिर्मीयते । तथा हि—
वराहमिहिरमते—

[3]हस्तविशालं कुण्डकमधिकृत्याम्बुप्रमाणनिर्देशः ।
पञ्चाशत्पलमाढकमनेन मिनुयाज्जलं पतितम् ॥

विषयेऽस्मिन् पराशरमतम्—

[4]आढकांश्चतुरो द्रोणमपां विन्द्यात्प्रमाणतः ।
धनुः प्रमाणं मेदिन्या विन्द्याद्द्रोणातिवर्षणम् ॥
समे त्रिंशाङ्गुलानाहे द्विचतुष्काङ्गुलोच्छ्रिते ।
भाण्डे वर्षति सम्पूर्णं ज्ञेयमाढकवर्षणम् ॥ इति ॥

आढकाख्यस्य वृष्टिपरिमाणस्य विषये पराशरेण अन्येषामपि मुनीनां मतं वर्णितम् । तथा हि—

[5]शतयोजनविस्तीर्णं त्रिंशद् योजनमुच्छ्रितम् ।
आढकस्य भवेन्मानं मुनिभिः परिकीर्तितम् ॥

---

१. अत्रैव श्लो० ३१-३२ ॥
२. अत्रैव भट्टोत्पलटीका ।
३. वृहत्संहिता । गर्भलक्षणाध्यायः । श्लो० २ ॥
४. अत्रैव ३२ तमश्लोकानन्तरमुद्धृतम् ॥ ( भट्टोत्पलटीका )
५. कृषिपराशरः । पृ० ६ । श्लो० २६ ॥

जलाढकमानं क्वचित्[1] त्रिंशद्योजनविस्तीर्णं शतयोजनमायतं, क्वचित्त [2]चतुर्योजनविस्तीर्णमुत्तानशतयोजनमिति कथितम् ।

## मेघविवेचनम् —

धूम-ज्योतिः-सलिल-मरुतां संघातजन्यो मेघ इति प्राच्यानां मतम् । अत्र धूमशब्देन वायुमण्डले विद्यमाना रजः कणा गृह्यन्ते, ये हि जलवाष्पसम्पर्काद् धूमरूपतां दर्शयन्ति । यथा वह्निधूमे दग्धस्य काष्ठतृणादेः सूक्ष्माः कणा उष्णत्वादुपरिगच्छति वायौ दृश्यन्ते तथैव वायुना उह्यमाना जलवाष्पावृता रजः कणा अपि धूमरूपा दृश्यन्ते । उष्णवायुसम्पर्के यत्र जलबाष्पं जलरूपेण न परिणमति तत्र धूमायितं वायुमण्डलं रूक्षां कुज्झटिकां धारयति । ज्योतिः सूर्यकिरणानां सन्तापः, तेजो वा । सलिलं जलवाष्पस्य शीतसम्पर्कादुद्भूतं जलम् । मरुन्मेघानां वाहको वायुरिति । मेघानामुत्पत्तिस्तु वृष्टिविवेचनप्रसङ्गे, वृष्टिगर्भप्रसङ्गे च वर्णिता । सम्प्रति मेघानां विविधाः प्रकारास्तावद् वर्ण्यन्ते । यथा आधुनिकैः पाश्चात्यवैज्ञानिकैर्मेघानां स्वरूपं तेषामुन्नतावनतस्थितिं चाधिकृत्य तेषां विविधाः प्रकारा वर्ण्यन्ते तथैव प्राच्यैरपि मेघानां वत्सरक्रमं स्वरूपं वानुसृत्य विविधाः प्रकारा वर्णिताः सन्ति । पाश्चात्यपद्धतौ सर्वप्रथमं १९तमशतकस्यारम्भे ल्यूकहावर्ड-महोदयैः चतुर्विधा (Cirrus, Cumulus, Stratus, Nimbus इत्याख्याः) मेघाः कथिताः । अनन्तरमन्यैर्विद्वद्भिरेतेषां चतुर्विधानां मेघानां मिश्रलक्षणा दशसंख्यका उपभेदाः कथिताः ।

प्राच्यभारतीयैर्विद्वद्भिस्तु वत्सरविशेषे वृष्टिसूचकाः क्वचिच्चतुर्विधाः, क्वचिच्च नवविधा मेघाः वर्णिताः । मेघानामस्मिन् प्रकारे वत्सरविशेषे वत्सराङ्कगणनया ज्ञातो मेघविशेषो तस्य वत्सरस्य वृष्टेः परिमाणं प्रकारं वा सूचयति । मेघानामेतेषां विशदं विवेचनं संवत्सरक्रमानुगतस्य वृष्टिज्ञानविधेर्वर्णनप्रसङ्गे करिष्यते । मेघानामेतेषां नामानि आवर्त्तः, संवर्त्तः, पुष्करः, द्रोणः, कालः, नीलः, वरुणः, वायुः, तम इति सन्ति ।

तथा हि चत्वारो मेघाः —

[3]आवर्तश्चैव संवर्तः पुष्करो द्रोण एव च ।
चत्वारो जलदाः प्रोक्ता आवर्त्तादि यथाक्रमम् ॥

---

१. स्मृतितत्त्वे पृ० ७०१ ॥

२. संवत्सरफलम् । स० भ० पु० पाण्डुलिपि–संख्या ३४३६८ । पृ० १० ॥

३. कृषिपराशरः । पृ० ६ । श्लो० २४ ॥

मतान्तरे नव मेघास्तु—

[1]ततश्चावर्त्तसंवर्तपुष्करद्रोणकालकाः ।
नीलश्च वरुणो वायुस्तमो मेघाः स्मृता नव ॥

आवर्तादीनां मेघानां वर्षणक्षमताऽपि प्राच्यैर्वर्णिता । तथा हि पराशरमते—

[2]एकदेशेन चावर्ते संवर्ते सर्वतो जलम् ।
पुष्करे दुष्करं वारि द्रोणे बहुजला मही ॥

संवत्सरफलग्रन्थे तु—

[3]आवर्ते छिन्नवृष्टिश्च संवर्ते जलपूरिता ।
पुष्करे मन्दवृष्टिः स्याद् द्रोणो वर्षति सर्वदा ॥

नवमेघपक्षे च—

[4]आवर्ते मन्दतोयं च संवर्ते वायुपीडनम् ।
पुष्करे मन्दतोयं च द्रोणे वृष्टिः सुशोभना ॥
अल्पवृष्टिश्च काले स्यात्, नीलः क्षिप्रं प्रवर्षति ।
वरुणे त्वर्णवाकारं वायुर्वर्षाविनाशनम् ॥
तमो मेघे न वृष्टिः स्यान्मेघानां फलमीदृशम् ॥

मेघानां स्वरूपमधिकृत्यापि मेघानां वर्षणक्षमता प्राच्यैर्वर्णिता । निर्विघ्नेभ्यो वृष्टिगर्भेभ्यो जातानां वर्षुकाणां मेघानां वर्णनं वराहमिहिरकृते बृहत्संहिताग्रन्थे दृश्यते । तथा हि—

[5]मुक्तारजतनिकाशास्तमालनीलोत्पलाञ्जनाभासः ।
जलचरसत्वाकारा गर्भेषु घनाः प्रभूतजलाः ॥
तीव्रदिवाकरकिरणाभितापिता मन्दमारुता जलदाः ।
रुषिता इव धाराभिर्विसृजन्त्यम्भः प्रसवकाले ॥

---

१. संवत्सरफलम् । स० भ० पु० पाण्डुलिपि संख्या ३४३९८ । पृ० १० ।

२. कृषिपराशरः । श्लो० २५ ॥

३. संवत्सरफलम् । पृ० १० ॥

४. अत्रैव । पृ० १० ॥

५. बृहत्संहिता । गर्भलक्षणाध्यायः । श्लो० २३–२४ ॥

इत्थमेवान्ये विविधरूपा मेघा द्वादशमासेषु वृष्टिगर्भसम्बन्धिनां पर्यवेक्षणानां वर्णनप्रसङ्गे वर्णयिष्यन्ते ।

## करकविवेचनम्—

करकोत्पत्तिविषयो बृहत्संहिताग्रन्थे वर्णितः । तत्रोक्तं यच्चेद् धृतो वृष्टिगर्भ उपघातवशात् स्वप्रसवकाले न वर्षति तर्हि पुनः स्वीयं गर्भसमयमेत्य करकवृष्टिं करकामिश्रां जलवृष्टिं वा करोति । करकवृष्टिः प्रायो वृष्टिगर्भकाल एव भवतीति मतमेतत्सर्वथा युक्तियुक्तं प्रतिभाति । तथा हि—

गर्भः[१] पुष्टः प्रसवे ग्रहोपघातादिभिर्यदि न वृष्टः ।
आत्मीयगर्भसमये करकामिश्रं ददात्यम्भः ॥

काठिन्यं याति यथा चिरकालधृतं पयः पयस्विन्याः ।
कालातीतं तद्वत् सलिलं काठिन्यमुपयाति ॥

वृष्टिगर्भकाले क्रूरग्रहप्रभावोऽपि काले वृष्टिगर्भप्रसवं प्रतिबध्नाति, अनन्तरं करकादिवृष्टिं च जनयति । तथा हि––

[२]क्रूरग्रहसंयुक्ते करकाशनिमत्स्यवर्षदा गर्भाः ।

भावप्रकाशग्रन्थे वारिवर्गेऽपि करकवृष्टिकारणं वर्णितमुपलभ्यते । तथाहि––

[३]दिव्य-वाय्वग्निसंयोगात् संहताः खात्पतन्ति याः ।
पाषाणखण्डवच्चापस्ताः करकयोऽमृतोपमाः ॥

अत्र बृहत्संहितायां वर्णिते करकवृष्टिकारणे यद् वैज्ञानिकं रहस्यं तदाधुनिक-वैज्ञानिकानां विशेषविचारमर्हति । प्रभावविशेषात् कथं वायुचक्रेऽव्यवस्था समापतति ? कथञ्च पुनर्वर्षानन्तरं मेघगर्भकालं प्राप्य सा अव्यवस्था करकवृष्टिं जनयति ?––इत्यादि ।

## कुज्झटिविवेचनम्—

जलवाष्पेण पूर्णतया असम्पृक्तः किञ्चिदुष्णो वायुर्यदा सन्ध्याकाले रूक्षं धूमरूपमादाय भूतलान्तिके भ्रमति तदा कुज्झटिका धूमिका वेति कथ्यते । वायोरुष्ण-

१. बृहत्संहिता । गर्भलक्षणाध्यायः । श्लो० ३५––३६ ॥
२. अत्रैव । श्लो० ३३ ॥
३. भावप्रकाशे । वारिवर्गे । श्लो० १७ ॥

त्वाज्जलवाष्पस्य जलरूपेण परिणमनाभावात् कुज्झटिकायां तादृशी आर्द्रता न भवति यथातुषारादौ । अस्य वर्णनं वैद्यके तावद् द्रष्टव्यम्--

[1]ज्ञेया कुज्झटिका रूक्षा तमः प्राया च सा तथा ।। इति ।।

## अवश्याय-विवेचनम् --

इयमेव कुज्झटिका धूमिका वा शैत्याधिक्येऽतिशीतानां तरु-तृण-पत्रादीनां संस्पर्शात्तत्रैव जलकणरूपेण घनीभूता अवश्यायरूपतां व्रजति । तथा हि--

सा चात्यर्थं घनीभूताऽवश्याय इति कथ्यते ।

## तुषारविवेचनम्--

तुषारोद्भवकारणं तावद् भावप्रकाशग्रन्थे वारिवर्गे वर्णितमुपलभ्यते । तथा हि--

[2]अपि नद्याः समुद्रान्ते वह्निरापस्तदुद्भवाः ।
धूमावयवनिर्मुक्तास्तुषाराख्यास्तु ताः स्मृताः ।।

कुज्झटिकायां वायोरुष्णत्वात् तत्रविद्यमानं जलबाष्पं जलरूपेण परिणमतीति रूक्षताऽनुभूयते । तुषारे तु शीतसम्पर्कात् तत्र विद्यमानं जलबाष्पं धूमरूपतां परित्यज्य सूक्ष्महिमकणरूपेण परिणमतीति तत्र धूमावयवनिर्मुक्तत्वं कथितम् ।

## हिमविवेचनम्--

यत्तु शैत्याधिक्यसम्पर्कात् वायौ विद्यमानं जलबाष्पं क्रमशो जलरूपेण तदनु घनीभूतहिमरूपेण परिणमति तद् हिममिति कथ्यते । अस्योत्पत्यादेर्वर्णनं भावप्रकाशे वारिवर्गे कृतं विद्यते । तथा हि---

[3]हिमवच्छिखरादिभ्यो द्रवीभूयाभिवर्षति ।
यत्तदेव हिमं हैमं जलमाहुर्मनीषिणः ।। इत्यादि ।।

तथा चान्ये--

[4]और्वानलधूमेरितमम्बु समुद्रस्य यद् घनीभूतम् ।
पवनानीतमुदीच्यां तद्धिममिति कथ्यते सद्भिः ।।

---

१. वैद्यके ।। वाचस्पत्यकोश उद्धृतम् ।।
२ भावप्रकाशे । वारिवर्गे । श्लो० १९ ।।
३. भावप्रकाशे । वारिवर्गे । श्लो० २१ ।।
४. अत्रैव । श्लो० २२ ।।

हिम-करका-कुज्झटि-अवश्याय-तुषारप्रभृतीनि जलवाष्पस्यैव रूपान्तराणि सन्ति ।

**इन्द्रधनुर्विवेचनम्—**

पवनेनोह्यमानानां शीकराणां मध्याद् यदा सूर्यकिरणा निःसरन्ति तदा तेषां विश्लेषणमुपपद्यते । वर्तुलाकारा हि जलकणाः काचगोलकवत् त्रिपार्श्ववद् वा सूर्यरश्मीनां वर्णविश्लेषणं विधाय सप्तवर्णात्मकं रश्मिपटलं विरचयन्ति । सूर्यरश्मयो हि वस्तुतः सप्तवर्णात्मका भवन्ति । तथा हि ऋग्वेदे स्पष्टं वर्णितम्—

[१]सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण ॥

[२]अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः । ताभिर्याति स्वयुक्तिभिः ।

अत्र हृञ् हरणे इत्यस्माद् धातोर्निष्पन्नो हरित् शब्दो रसहरणशीलानां सूर्यप्रकाशवहनशीलानां वा सूर्यकिरणानामवबोधकः । तदुक्तं सायणाचार्येण स्वभाष्ये—"हरितः अश्वाः रसहरणशीला रश्मयो वे"ति । अत्रोद्धृते नवममंत्रे शुन्ध्युवः शोधनशीला इति विशेषणमपि किरणानामेव सम्भवति । यत्तु सप्तहरितः सप्ताश्वस्त्रिय इति वर्णनं तत् श्लिष्टरूपकमेव । अतः सप्तहरित इतिशब्दः सप्तवर्णानां किरणानामेव सूचकः । एते सप्तवर्णाः किरणा यदा संश्लिष्टास्तदा श्वेतवर्णा दृश्यन्ते यदा तु केनचिद् विश्लेषकमाध्यमेन विश्लिष्टास्तदा सप्तवर्णान् पृथक् प्रदर्शयन्ति । अयमेव विषयो वराहमिहिरेण स्वीये बृहत्संहिताग्रन्थे वर्णितः । तथा हि—

[३]सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे ।
वियति धनुः संस्थाना ये दृश्यन्ते तदिन्द्रधनुः ॥

अत्र साभ्रे वियतीत्यस्य जलशीकरयुते वियतीत्यर्थो बोध्यः ।

इदमिन्द्रधनुः कालविशेषेऽवस्थानविशेषे च दृष्टो भाविनाम् ऋतुपरिवर्तनानां वृष्ट्यादीनां सूचको भवति । अस्य वर्णनं वृष्टिगर्भलक्षणानां वर्णनप्रसङ्गे यथावसरं करिष्यते ।

**विद्युद्विवेचनम्—**

"द्युत दीप्तौ" इत्यस्माद् धातोः, क्विपि, विशेषेण द्योतते इत्यर्थे विद्युच्छब्दो निष्पद्यते । सुदाम्नि, मेघे जातत्वादियं सौदामनीति कथ्यते । तथा हि "सुदामा तु

---

१. ऋग्वेदे । प्रथममण्डले । ५० सूक्ते । मन्त्रसंख्या ८ ॥

२. अत्रैव । मन्त्रसंख्या ९ ॥

३. बृहत्संहिता । इन्द्रायुधलक्षणाध्यायः । श्लो० १॥

पुमान् वारिधरपर्वतभेदयोरिति कोषः"। ऋग्वेदे दशममण्डलस्य पञ्चनवतितमे सूक्ते इयं उरु अश्नातीत्यर्थे उर्वशीति नाम्ना श्लिष्टरूपकेण वर्णिता[1]। अनया सह मित्र-वरुणयोः सूर्यजलयोः सम्बन्धस्य वर्णनमपि अस्याः वैज्ञानिकं स्वरूपं स्पष्टीकरोति। विषयोऽयं ग्रन्थविस्तरभिया अत्र विस्तरेण वर्णयितुं न शक्यते। वृष्टिकाले दिग्विशेषे विद्युतो विद्योतनं भाविवृष्ट्यादेः सूचकं भवति। अस्या वर्णनं तावद् वराहमिहिरेण। स्वग्रन्थे कृतम्। तथा हि—

[2]विद्युत्सत्त्वत्रासं जनयन्ती तटतटस्वना सहसा।
कुटिल विशाला निपतति जीवेन्धनराशिषु ज्वलिता॥

तथैव काश्यपमते—

[3]विद्युत् त्रासकरी भीमा शब्दयन्ती तटत्तटा।
बृहच्छीर्षाऽतिसूक्ष्मा च जीवेषु च पतेत् सदा॥

**उल्कास्वरूपम्—**

ऋतुज्ञाननिमित्तेषु उल्काऽपि गण्यते इयमनेकविधा भवति। तद्यथा समाससंहितायाम्—

उल्काऽथ पञ्चरूपा धिष्ण्योल्का विद्युतोऽशनिस्तारा॥ इति॥

उल्कावर्णनं बृहत्संहितायां वक्ष्यमाणमुपलभ्यते। तथा हि—

[4]उल्का शिरसि विशाला निपतन्ती वर्धते प्रतनुपुच्छा।
दीर्घा च भवति पुरुषं, भेदा बहवो भवन्त्यस्याः॥

**तथैव काश्यपमते—**

[6]उल्का मूर्धनि विस्तीर्णा पतन्ती वर्धते तु सा।
तनुपुच्छा नृमात्रा तु बहुभेदसमावृता॥ इत्यादि॥

---

१. ऋग्वेदे। दशममण्डले। सूक्तसंख्या ९५॥
२. बृहत्संहिता। उल्कालक्षणाध्यायः। श्लो० ५॥
३. अत्रैव। दशमश्लोके समुद्धृतं काश्यपवचनम्॥ भट्टोत्पलटीका।
४. अत्रैव। द्वितीयश्लोके समुद्धृतम्। भट्टोत्पलटीका।
५. अत्रैव। श्लो० ८॥
६. अत्रैव। दशमश्लोके समुद्धृतम्॥ भट्टोत्पलटीका।

**धिष्ण्या—स्वरूपम्—**

धिष्ण्याख्यस्योल्काभेदस्य स्वरूपं वराहमिहिरेण स्वीये वृहत्संहिताग्रन्थे वर्णितम्। तथा हि—

'धिष्ण्या कृशाल्पपुच्छा धनूंषि दश दृश्यतेऽन्तराभ्यधिकम्।
ज्वलिताङ्गारनिकाशा द्वौ हस्तौ सा प्रमाणेन॥[1]

काश्यपमते—

'धनूंषि दश या दृश्या सा च धिष्ण्या प्रकीर्तिता।
ज्वलिताङ्गारसदृशी द्वौ हस्तौ सा प्रमाणतः॥[2]

अन्येषां मते —

'धिष्ण्या सिता द्विहस्ता धनूंषि दश याति कृशदेहा॥ इति॥[3]

**अशनिस्वरूपम्—**

अशनिरपि तावदुल्काभेदरूपा। अस्याः स्वरूपं वृहत्संहितावर्णितमत्र कथ्यते। तथा हि—

'अशनिः स्वनेन महता नृगजाश्वमृगाश्मवेश्मतरुपशुषु।
निपतति विदारयन्ती धरातलं चक्रसंस्थाना॥[4]

समाससंहितायामपि अशनिस्वरूपं वर्णितम्। तथा हि—

'अशनिः प्राणिषु निपतति दारयति धरातलं वृहच्छब्दा।[5]

काश्यपमतेऽपि—

'नरेभतुरगाश्वाश्मवृक्षेषु च पतेत्सदा।
ज्वलन्ती चक्रवद् दृश्या त्वशना रावसंयुता॥[6]

---

१. वृ० सं०। उल्कालक्षणाध्यायः। श्लो० ६॥
२. अत्रैव। दशमश्लोके समुद्धृतं काश्यपवचनम्॥
३. अत्रैव। षष्ठश्लोके समुद्धृतं वचनम्॥
४. अत्रैव। श्लो० ४॥
५. अत्रैवोद्धृतम्॥
६. दशमश्लोके। भट्टोत्पलविवृतौ॥

## तारा-स्वरूपम् —

उल्काभेदभूतायास्ताराया अपि वर्णनं वराहमिहिरेण स्वीये बृहत्संहिताग्रन्थे कृतम्। तथा हि—

[1]तारा हस्तं दीर्घा शुक्ला ताम्राब्जतन्तुरूपा वा।
तिर्यगधश्चोर्ध्वं वा याति वियत्युह्यमानेव॥

तथैव काश्यपमतेऽपि—

[2]पद्मताम्राकृतिश्चैव हस्तमात्रायता गता।
तिर्यगूर्ध्वमधो याति सोह्यमानेव तारका॥

अन्येषां मते—

[3]तारा तु हस्तमात्रा यात्यूर्ध्वमधः स्थिता सिता ताम्रा॥ इति॥

## परिवेषस्वरूपम्—

यदा तु मेघच्छन्ने दिवसे सन्ध्ययोर्वा शीकररूपतामुपगते सघने जलवाष्पे सूर्यकिरणानां पूर्णतया विश्लेषणं भवति तदा आकाशे इन्द्रधनुर्दृश्यते, परं यदा तु विरलाद् अनार्द्रजलवाष्पमध्यान्निःसरन्तः सूर्यकिरणाश्चन्द्रकिरणा वा अंशतो विश्लिष्टा भवन्ति तदा परिवेषो दृश्यते। अनार्द्रजलवाष्पस्य सूर्यचन्द्रयोर्दिग्विशेषे स्थितत्वात् तस्मिन् पार्श्वे किरणानामवस्थानविशेषात् तेषां विश्लेषणमात्रामनुसृत्य परिवेषस्य वर्णभेदोऽपि जायते। तथा हि बृहत्संहितायां वर्णितं परिवेषस्वरूपं तावद् द्रष्टव्यम्—

[4]सम्मूर्च्छिता रवीन्द्वोः किरणाः पवनेन मण्डलीभूताः।
नानावर्णाकृतयस्तन्वभ्रे व्योम्नि परिवेषाः॥ इति॥

ऋतुलक्षणाध्ययनप्रसङ्गे परिवेषस्य फलं वर्णयिष्यते।

## प्रतिसूर्यकस्वरूपम् —

वायुमण्डले तापक्रमवैविध्याद् क्वचित् सघनः क्वचिच्च विरलो वायुः सम्पद्यते। इत्थम्भूतानां विषमघनत्वमयानां वायुपटलानां मध्यान्निःसरन्तः सूर्यप्रकाशकिरणाः स्वीये आवर्तनक्रमे कुटिलतामुपगता दृष्टिभ्रममुत्पादयन्ति। फलतश्च

---

१. बृ० सं०। उल्कालक्षणाध्यायः। श्लो० ७॥
२. अत्रैव। दशमश्लोके। भट्टोत्पलविवृतौ॥
३. अत्रैव। सप्तमश्लोके। भट्टोत्पलविवृतौ॥
४. बृ० सं०। परिवेषलक्षणाध्यायः। श्लो० १॥

मृगमरीचिकावत् सूर्यसन्निधौ प्रतिसूर्यकाख्यानि सूर्यबिम्बस्य विविधवर्णानि प्रतिबिम्बानि दृश्यन्ते। प्रतिबिम्बान्येतानि ऋतुलक्षणाध्ययने निमित्तभूतानि भवन्ति। एतेषां ऋतुलक्षणफलं यथावसरं वर्णयिष्यते। बृहत्संहिताग्रन्थे प्रतिसूर्यकाणामपि वर्णनं कृतम्। तथा हि–

[1]प्रतिसूर्यकः प्रशस्तो दिवसकृदृतुवर्णसप्रभः स्निग्धः।
वैदूर्यनिभः स्वच्छः शुक्लश्च क्षेमसौभिक्षः॥

अत्र कथिताः दिवसकृत ऋतुवर्णास्तावद् वक्ष्यमाणा भवन्ति। तथा हि–

[2]ताम्रः कपिलो वाऽर्कः शिशिरे, हरिकुङ्कुमच्छविश्च मधौ।
आपाण्डुकनकवर्णो ग्रीष्मे, वर्षासु शुक्लश्च॥
शरदि कमलोदराभो, हेमन्ते रुधिरसन्निभः शस्तः।
प्रावृट्काले स्निग्धः सर्वर्तुनिभोऽपि सुखदायी॥

अत्र समाससंहिता–वचनम्–

[3]ताम्र-घृतकनकमुक्ताकमलासृक्सन्निभः शुभः सविता।
शिशिरादिषु षट्सु ऋतुषु प्रावृषि सर्वर्तुसन्निभः स्निग्धः॥ इति॥

विषयेऽस्मिन् वृद्धगर्गमतमपि तावद् द्रष्टव्यम्—

[4]शिशिरे ताम्रसंकाशः कपिलो वाऽपि भास्करः।
वसन्ते कुङ्कुमप्रख्यो हरितो वाऽपि शस्यते॥
ग्रीष्मे कनकवैदूर्यः सर्वरूपो जलागमे।
शस्तः शरदि पद्माभो हेमन्ते लोहितप्रभः॥ इति॥

## निर्घातस्वरूपम्—

यदा आकाशे विपरीतदिग्गामिनौ पवनवेगौ परस्परमाघट्टयतस्तदा सम्मिलितो वायुवेगो वेगाधिक्याद् घनत्ववर्धनाच्चातिघोरं शब्दं जनयन् भूमावापतति। अस्य वर्णनं तावद् बृहत्संहितायां कृतमास्ते। तथा हि–

---

१. बृ० सं०। प्रतिसूर्यलक्षणाध्यायः। श्लो० १॥

२. बृ० सं०। तृतीयाध्यायः। श्लो० २३-२४॥

३. अत्रैवोद्धृतम्॥

४. अत्रैवोद्धृतम्॥

[१]पवनः पवनाभिहतो गगनादवनौ यदा समापतति ।
भवति तदा निर्घातः स च पापो दीप्तविहगरुतः ॥

विषयेऽस्मिन् गर्गमतमप्येतदेव—

यदाऽन्तरिक्षे बलवान् मारुतो मारुताहतः ।
पतत्यधः स निर्घातो भवेदनिलसम्भवः ॥ इति ॥

इत्थमुक्ता विषयाः ऋतुलक्षणानामध्ययनप्रसङ्गे यथावसरं वर्णयिष्यन्ते ।

## ऋतुविज्ञानस्य वैज्ञानिक-पौराणिक-पक्षयोः समन्वयः—

बहुशः कथ्यते यत् संस्कृतग्रन्थेषु वृष्ट्यादीनां विषये वर्णिताः पौराणिका विचारा वैज्ञानिकविचारेभ्यो भिन्नाः सन्ति । परमेतत् सर्वथा भ्रममूलकमेव । पुराणानां या श्लिष्टरूपकमयी वर्णनशैली वर्तते सा चेत् सम्यगनवगता तर्हि भ्रममुत्पादयति । वस्तुतस्तु श्लिष्टरूपकमयीं वर्णनशैलीमधिकृत्य संस्कृतग्रन्थेषु वर्णिता विषया विचाराश्च पूर्णतया वैज्ञानिकाः सन्ति । अत्र तावदुदाहरणरूपेण प्रथमं वृष्टिविषयका विचाराः प्रस्तूयन्ते ।

तद्यथा पौराणिकेषु श्लिष्टरूपकमयेषु वर्णनेषु वृष्टेः शक्राधीनत्वमिन्द्राधीनत्वं वा वर्णितम् । परमत्र शक्रशब्दः, तत्पर्यायः इन्द्रशब्दो वा प्रभूतजलवर्षिणां मेघानामेव प्रतिपादको वर्तते—"शक्रो घातुकमत्तमो वर्षुकाब्दो घनाघनः" इति कोषात् ।

यथाभूमण्डले समुद्रादिषु सञ्चितस्य जलराशेरधिष्ठातृदेवता वरुणः, तथैव वायुमण्डले जलवाष्पादिरूपैर्विचरतो जलराशेरधिष्ठातृदेवता इन्द्रः कथितः । भूरिजलवर्षिणो मेघाः श्वेतवर्णा भवन्तीति विषयः ऐरावताख्यश्वेतगजारूढस्ययेन्द्रस्य वर्णनादुक्तो भवति । गजशब्दोऽपि उक्तकोषानुसारं वर्षुकाब्दपर्याय एव । यथा गजाः स्वकरैस्तथैव गजपर्याया वर्षुकाब्दाः सूर्यकरसाहाय्येन समुद्रादिभ्यो जलाशयेभ्यो जलमाददतीति यत् सूर्यस्य किरणानां कराणां वा हस्तिकरैरुपमा वर्ण्यते तत्सर्वथा युक्तियुक्तमेव । उदाहरणार्थं ब्रह्मवैवर्तपुराणे कृत वृष्टेर्द्विविधं वर्णनं तावद् द्रष्टव्यम् । अत्र हि वृष्टेर्वैज्ञानिकपक्षवर्णने कथितम्—

[२]सूर्यग्रस्तञ्च नीरञ्च काले तस्मात् समुद्भवः ।
सूर्यो मेघादयः सर्वे विधात्रा ते निरूपिताः ॥ इति ॥

---

१ बृ० सं० । निर्घातलक्षणाध्यायः । श्लो० १ ॥

२. ब्रह्मवैवर्तपुराणे । श्रीकृष्णजन्मखण्डे । २१–तमाध्याये । श्लो० १०५ ॥

अत्रैव श्लिष्टरूपकेण वर्णितो वृष्टेः पौराणिकः पक्षोऽपि विद्यते । तथा हि—

[1]हस्ती समुद्रादादाय करेण जलमीप्सितम् ।
दद्याद् घनाय तद् दद्याद् वातेन प्रेरितो घनः ॥
स्थाने स्थाने पृथिव्याञ्च काले काले यथोचितम् ।
ईशेच्छयाऽऽविर्भूतं च न भवेत् प्रतिबन्धकम् ॥

अत्रापि "हस्ती, करैः"—प्रभृतयो द्व्यर्थकाः शब्दाः श्लेषेण वैज्ञानिकीं वृष्टि-प्रक्रियामेव वर्णयन्ति ।

अत्रोद्धृतयोर्वैज्ञानिक-पौराणिक-वर्णनयोरुभयत्रापि यदीश्वरेच्छाया वृष्टे-र्नियामकत्वं स्वीकृतम् तत्सर्वथा युक्तियुक्तमेव । वैज्ञानिकैरपीदमेव स्वीक्रियते यत् सर्वमपीदं जगतश्चक्रं केनाप्यज्ञातेन नियामकेन नियन्त्रितं प्रचलति । अत ईदृशेषु कार्येषु यज्ञ-तन्त्र-मन्त्राराधनादिभिः तस्या अविज्ञाताया नियामकशक्तेः सद्भावेन स्मरणं विचारणं, मननं वाऽपि अवैज्ञानिकं नास्ति । इत्थं कूपतडागादीनां जला-शयानां निर्माणकार्येषु भूमण्डले सञ्चितजलराशेरधिष्ठातृदेवतायाः वरुणस्य पूजनेन, वृष्ट्यादि-विषयक-यज्ञेषु वायुमण्डलस्थितजलराशेरधिष्ठातृदेवताया इन्द्रस्य च पूजनेनाभिप्रेतं जगतो नियामकस्य पूजनं वैज्ञानिकविचारधारायाः प्रतिकूलं न भवति ।

प्रकरणेऽस्मिन् वृष्टि-विवेचनप्रसङ्गे आदित्यस्य वृष्टिकारणत्वं वैज्ञानिकदृष्ट्या स्पष्टीकृतम् । अतोऽनावृष्ट्यादिषु यज्ञद्वारेणादित्यस्याराधनमनुकूलनं वा सर्वथा सङ्गतमेव । तथा हि गीतायामुक्तम्—

अग्नौ प्राप्ताहुतिः सम्यगादित्यः सुप्रतिष्ठते ।
आदित्याज्जायते वृष्टिरित्यादि ॥

अत्र यज्ञद्वारेणादित्यस्याराधनातिरिक्तं यज्ञानां भौतिकः पक्षोऽपि तावद् विचारमर्हति । तथा हि—

वृष्टिविवेचनप्रसङ्गे समुद्धृते छान्दोग्योपनिषदः शाङ्करभाष्ये या वृष्टिपद्धति-र्वर्णिता तत्र "तेजोरूपं जलं वायुमागृह्यावष्टभ्यात्मना निश्चलीकृत्य वायुमाकाशमभि-व्याप्नुवत्तपति यदा, तदाऽऽहुर्लौकिकाः निशोचति सन्तपति सामान्येन जगन्नितपति देहान्, अतो वर्षिष्यति वा इति ।" तथैव ब्रह्मवैवर्तपुराणेऽपि—सूर्यग्रस्तं च नीरं चेत्यादि वर्णितम् ।

---

1. अत्रैव । श्लो० १०८-१०९ ॥

अत्र हि सूर्यकरैर्ग्रस्तं तेजोयोनिभूतं जलवाष्पमादाय यदा पवनः उच्चैराकाशे गच्छति तदा भूमण्डलात् परावर्तमाना सूर्योष्मैव स्वप्रभावाद् विरलतां लघुत्वञ्चोपगतं पवनमुपरि नयति। पवनो हि तापप्रभावेण विरलतां गच्छन् प्रसरति, लघुश्च भवतीति प्रत्यक्षं तथ्यम्। जलवाष्पवाही पवनोऽयं लघुत्वादुच्चैराकाशमेत्य तत्र पुनः शीतसम्पर्कात् सङ्कोचमेति, तत्र धृतं जलबाष्पं च शीकररूपेणपरिणमति। शैत्याज्जायमानया पवनस्याकुञ्चनप्रक्रियया जलकणा परस्परं संघीभूय वृहदाकारतां गच्छन्ति। यदा तु पवनो वृहदाकाराणां गुरुतराणाञ्च जलकणानां धारणेऽसमर्थो भवति तदैतेऽम्बुकणा जलबिन्दवो वा भूमौ निपत्य वृष्टिं जनयन्ति।

उक्तक्रमेऽस्मिन् कदाचिद् वायुमण्डले मेघपटल-भूतलयोर्मध्ये वर्तमानानां वायुपटलानां विपर्यस्तत्वाद् सूर्योष्मणो भूतलागमने भूतलात्परावर्तने वाऽवरोधो जायते। तापमार्गावरोधोऽयं भूतलमेघपटलयोर्मध्यगतं पवनचक्रमवरुणद्धि। इत्थं च जलवृष्टेरप्यवरोधो जायते। सत्येवं यज्ञोष्मणा लध्वीकृतो वायुरुपरिगच्छन्, तत्र च शैत्यसम्पर्काद् गुरुत्वमुपगतः सामान्यवायोर्गुरुतरो यज्ञोद्भूतो (कार्बन डाईऑक्साइड) वायुः पुनरधस्तादागच्छन् स्वीयया गमनागमन-प्रक्रियया भूतलमेघपटलयोर्मध्यगतानां विपर्यस्तानां पवनपटलानां भेदनं विधाय भूतलमेघपटलयोर्मध्ये मारुतचक्रक्रमं संस्थाप्य वृष्टिप्रक्रियां प्रवर्तयति। यज्ञकर्मणि मंत्रोच्चारणैर्जनितानि विशिष्टानि कम्पनान्यपि यज्ञाग्निप्रवर्तितेन पवनचक्रेण सहोपरिगतानि स्वप्रभावाद् अव्यवस्थिताया वृष्टिप्रक्रियायाः सुव्यवस्थापने साहाय्यमाचरन्ति। ध्वनिकम्पनानां दूरगामिनः प्रभावाः सम्प्रति रेडियोप्रभृतीनां यंत्राणामाविष्करणेन निर्विवादाः सन्तीति सुस्पष्टम्।

इत्थं वृष्टिप्रवर्तनाय प्राच्यैर्वर्णितानां यज्ञानां न केवलं वृष्टिनियामकस्येश्वरस्याराधनापक्ष एव, परं भौतिकः पक्षोऽपि महत्त्वमावहति।

यथा वृष्टेः पौराणिकः पक्षः सर्वथा वैज्ञानिकस्तथैव विद्युद्विसर्गादीनां श्लेषगर्भाणि पौराणिकवर्णनान्यपि सर्वथा वैज्ञानिकान्येव। प्रसङ्गेऽस्मिन् ऋग्वेदे दशममण्डलस्य पञ्चनवतितमे सूक्ते श्लिष्टरूपकमयं विद्युद्विसर्गप्रभावस्य वर्णनं तावद् द्रष्टव्यम्।

अत्र हि विद्योतनशीला विद्युत्, सुदामसु मेघेषु वसन्ती सौदामनी, अशनशीला अशनिरेव बहु अशनशीलत्वाद् उर्वशीतिनाम्ना श्लिष्टरूपकेण वर्णिता। तथा हि—

'विद्युन्न या पतन्ती दविद्योद् भरन्ती मे अप्या काम्यानि।
जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः'[1]॥

१. ऋग्वेदे। दशममण्डले। ९५ तमसूक्ते॥

अत्र पतन्ती-गच्छन्ती। दविद्योद् द्योतते। अप्या-अन्तरिक्षसम्बन्धीनि, तत्र व्याप्तानि वा। काम्यानि-अस्मदभिमतानि। मे मह्यम्। भरन्ती-सम्पादयन्ती। अपः, व्याप्तः। नर्यः, नरेभ्यो हितः। सुजातः, सुजननः। जनिष्टो, अजनिष्ट। दीर्घमायुः प्रतिरत, प्रवर्धयति। अत्रैव मंत्रान्तरे—

[1]अन्तरिक्षप्रां रजसो विमानीत्यादि ॥

अन्तरिक्षप्रां-स्वतेजसा अन्तरिक्षस्य पूरयित्रीम्। रजसः, रजःकणभूतस्य (नत्रजनभस्मनः)। विमानीं निर्मात्रीम्।

श्लिष्टरूपकमयोर्वशीकथानकस्य वैज्ञानिक आशयस्तावदेवमवगन्तव्यः —

पृथिव्या वायुमण्डले वायोः पञ्चमांशः ऑक्सीजनतत्वस्य, प्रायः पञ्चमांशचतुष्टयं नाइट्रोजनतत्त्वस्य च विद्यते। असंयुक्तरूपेण वायुमण्डले विद्यमानस्य नाइट्रोजनतत्त्वस्योपयोगो वृक्ष-वनस्पत्यादिभिः कर्तुं न शक्यते। अतः स 'नर्यः' मानवोपयोगि न भवति। परं यदा तु स्वतेजसा अन्तरिक्षं पूरयित्री उर्वशी (विद्युत्) गच्छन्ती द्योतते तदा अन्तरिक्षे व्याप्तं वृक्षाणामनुपयोगि नाइट्रोजनतत्वं नाइट्रोजन-ऑक्साइड-इत्याख्ये यौगिके परिणमय्य वृक्षोपयोगितां नयति। इत्थञ्च तत्त्वमेतद् नरेभ्य उपयोगि विदधाति। अन्तरिक्षे विद्युद्दाहेन भस्मरूपतां गतं नाइट्रोजनतत्त्वं वृष्टिजलेन भूमावानीयते। अत्र च भूमितत्त्वैः सह तस्य लवणाख्या यौगिकाः सम्पद्यन्ते। एतेषां यौगिकानामुपयोगं विधाय वृक्षाः मनुष्येभ्यः पशुपक्षिभ्यश्च पोषकाणि अन्नादीनि निष्पादयन्ति, यैः पशुपक्षिणां मनुष्याणां च पोषणं भवति दीर्घायुष्यं च सम्पद्यते।

निबन्धविस्तरभिया प्रसङ्गस्यास्य विस्तृतं विवेचनमत्र नोपन्यस्यते। इत्थमेवान्यत्रापि पौराणिकपद्धत्या वर्णितानां विषयाणां वैज्ञानिकत्वं स्पष्टीकर्तुं शक्यते।



१. अत्रैव मन्त्रसंख्या १७ ॥

# द्वितीयं प्रकरणम्

## ( वृष्टिज्ञान-विषयः )

### प्राच्यभारतीया ऋतुविज्ञानविषयः --

भाविनाम् ऋतुपरिवर्तनानां पूर्वसूचनामधिगन्तुं सम्प्रति पाश्चात्यवैज्ञानिकैः बहुविधानां यत्राणां निर्माणं कृतं वर्तते। परमेतेभ्यो यंत्रेभ्यः केवलं तात्कालिकानाम् ऋतुपरिवर्तनानां सूचनाः कतिपयघटिकाभ्यो द्वित्रिदिवसेभ्यो वा प्रागुपलभ्यन्ते। एतदतिरिक्तं बहुमूल्यानि यंत्राण्येतानि वर्तमानायां भारतीयार्थव्यवस्थायां सर्वसुलभानि न भवन्ति। ऋतुपरिवर्तनज्ञानस्य प्राच्यविधिभिस्तु वृष्ट्यादीनां भाविनां ऋतुपरिवर्तनानां सूचना मासेभ्यो वर्षेभ्यो वा प्रागुपलभ्यन्ते। एतदतिरिक्तं विधिष्वेतेषु व्ययसाध्यानां यन्त्राणामावश्यकता न भवति।

प्राच्यभारतीयासु ऋतुज्ञानविधिषु क्वचिद् वायुगतिपर्यवेक्षणात्, क्वचिदाकाशलक्षणानामध्ययनात्, क्वचिद् वृक्षगुल्मलतादीनां वनस्पतीनां चेष्टाः समधीत्य, क्वचित् पशु-पक्षि-कीट-सरीसृप जलचरादीनां चेष्टाः समधीत्य, क्वचित् सूर्य-चन्द्रयोः प्रकृतिविकृतिं विलोक्य, क्वचिद् वृष्टिगर्भलक्षणान्यधीत्य, क्वचिद् ग्रहनक्षत्रादीनाम् उदयास्तमयगतिसङ्क्रान्तियोगादिभ्यः, क्वचिद् संवत्सरक्रमानुवर्तिनीं पद्धतिमाश्रित्य, क्वचिच्च, व्ययं विनैव सर्वसुलभेभ्यः स्वरचितेभ्यो यंत्रेभ्यो वा भाविवृष्ट्यादीनाम् ऋतुपरिवर्तनानां ज्ञानं भवति। विधिष्वेषु केचन विषयस्तु अंशतः पारम्परिकरूपेण साम्प्रतमपि देशे प्रयुज्यन्ते परं तेषां सैद्धान्तिकपक्षस्य शास्त्रीयस्वरूपस्य च लोपात्तेऽपि क्रमशो विलुप्यमानाः सन्ति। अतः प्रकरणेऽस्मिन् प्राच्य-संस्कृतग्रन्थानां गभीरानुशीलनात् प्राप्तैरनुभवैः विधीनामेतेषां सैद्धान्तिकपक्षस्य वैज्ञानिकं विवेचनं समुपस्थाप्य तेषां शास्त्रीयं स्वरूपं पुनः प्रतिष्ठापयितुं प्रयासः क्रियते।

### प्राच्यविधिभिर्ज्ञातानां वृष्ट्यादिसम्बन्धिनाम् ऋतुसूचनानां वर्णनस्य प्राच्यभारतीया शैली --

प्रसङ्गेऽस्मिन् प्राच्यभारतीयानाम् ऋतुज्ञानविधीनां वर्णनात् प्राक् प्राच्यग्रन्थेषु प्राच्यैर्विद्वद्भिः प्रयुक्ताया वृष्ट्यनावृष्टिकुवृष्ट्यादिसम्बन्धिनीनां सूचनानां वर्णनस्य पद्धतेः परिचयः परमावश्यकः। प्राच्यैर्हि ऋतुवैज्ञानिकैर्भाविवृष्ट्यादीनां ज्ञानार्थं प्राच्यविधिष्वाधृतानि यानि पर्यवेक्षणानि कृतानि तेषां फलानां वर्णने क्वचित्तु तैः प्रत्यक्षतोऽनावृष्टि-अतिवृष्टि-अनृतुवृष्टि-अनभ्रवृष्टि-उपलवृष्टि-अनभ्रोपलवृष्टि-सच्छिद्रातिवृष्टि-प्रभृतीनां शब्दानां प्रयोगः कृतः; परं क्वचिदुक्तवृष्टिविकृत्यादिफलभूतानां

दुर्भिक्ष-क्षुद्भय-शत्रुभय-राष्ट्रभय-रोग-नृपयुद्ध-नृपमृत्यु-नृपवध-दैवकोप प्रभृतीनां विषयाणां निर्देशं कृत्वा अप्रत्यक्षरूपेण अतिवृष्ट्यादीनां वर्णनं कृतम् ।

येषु प्राच्यग्रन्थेषु पाण्डुलिपिषु वा ईदृशानि वर्णनान्युपलभ्यन्ते तत्र प्राच्य-वर्णन-पद्धतेरिदं रहस्यं स्पष्टीकृतं न विद्यते, अतस्तानि वर्णनानि अनेकशोऽसम्बद्धानीव प्रतीयन्ते । परं प्राच्यानाम् अत्रिगर्गादीनां मुनीनाम् ऋतुप्रकृतिविकृति-विषयका ये विचाराः वराहमिहिरेण सङ्कलय्य स्वग्रन्थे वर्णितास्तेभ्यः पारिभाषिक-शब्दानामेतेषां रहस्यं स्फुटतामेति । तथा हि—

[1]यानत्रेरुत्पातान् गर्गः प्रोवाच तानहं वक्ष्ये ।
तेषां संक्षेपोऽयं प्रकृतेरन्यत्वमुत्पातः ॥

प्रसङ्गेऽस्मिन् आचार्येण प्रकृतेरन्यत्वम् ऋतोः प्रकृतिर्विकृतिर्वा 'उत्पात'–शब्देन वर्ण्यते । अत्र हि द्विविधा ऋतूत्पाता वर्णिताः सन्ति । ये उत्पाता ऋतोः प्रकृति-विकृति-जनितास्ते क्लेशकारका भवन्ति । ये तु पुनः ऋतुस्वभावजनितास्ते क्लेशान्नोत्पादयन्ति अत्र तावद् ऋतोः प्रकृतिविकृतिजनितानामुत्पातानां वर्णनं क्रियते । तथा हि—

[2]दुर्भिक्षमनावृष्टावतिवृष्टौ क्षुद्भयं परभयं च ।
रोगो ह्यनृतुभवायां नृपतिवधोऽनभ्रजातायाम् ॥
शीतोष्णविपर्यासो नो सम्यगृतुषु सम्प्रवृत्तेषु ।
षण्मासाद्राष्ट्रभयं रोगभयं दैवजनितं च ॥
अन्यर्त्तौ सप्ताहं प्रबन्धवर्षे प्रधाननृपमरणम् ।
रक्ते शस्त्रोद्योगो मांसास्थिवसादिभिर्मरकः ॥
उपला विना जलधरैर्विकृता वा प्राणिनो यदा वृष्टाः ।
छिद्रं वाप्यतिवृष्टौ सस्यानामीतिसञ्जननम् ॥ इत्यादि ॥

इत्थम् ऋतुसूचनानां वर्णनस्य प्राच्यपद्धतौ दुर्भिक्षशब्दादनावृष्टिः, क्षुद्भय-शत्रुभयशब्दाभ्यामतिवृष्टिः, रोगोत्पत्तिवर्णनादनृतुभवा वृष्टिरित्यादि विज्ञेयम् । यत्र तु सामान्यरूपेण सुभिक्षं सस्यसमृद्धिर्वा वर्ण्यते तत्रर्तुभवा शोभना च वृष्टिर्बोध्या ।

ऋतुस्वभावजनितानां तत्तदृतुसमुद्भवानामुत्पातानां वर्णनं द्वादशमासेषु वृष्टिगर्भलक्षणानां वर्णनप्रसङ्गे यथावसरं करिष्यते ।

---

१. बृहत्संहिता । उत्पाताध्यायः । श्लो० १ ॥

२. बृहत्संहिता । उत्पाताध्यायः । श्लो० ३८, ३९, ४० ४२ ॥

## वायुगतेः पर्यवेक्षणाद् वृष्ट्यादेः पूर्वज्ञानम्—

प्रथम-प्रकरणे वृष्टिविवेचनप्रसङ्गे स्पष्टीकृतं यत्सूर्यतापेन वाष्परूपतामुपातं जलं वायुना उच्चराकाशे नीयते। तत्र च शीतसम्पर्कात्, जलवाष्पं पुनर्जलबिन्दुरूपेण परिणमति, ततश्च वृष्टिर्भवति। प्रक्रियायामस्यां वायोर्गतिशीलतायाः कारणं वायुमण्डले तापस्य वैषम्यमेवेत्यपि पूर्वप्रकरणे यज्ञानां भौतिकपक्षस्य विवेचनप्रसङ्गे स्पष्टीकृतम्। वायुमण्डले विद्यमानस्य तापस्य प्रमुखं कारणं सूर्य एवेति सर्वविदितम्। खमण्डले सूर्यस्य गतिः सुनिश्चितं क्रममनुवर्तते, सूर्यस्य भूमण्डलेन सह सम्पर्कोऽपि सुनिश्चितेनैव क्रमेण प्रचलति। अतः सूर्यतापप्रेरिताया वायुगतेरपि कश्चन सुनिश्चितः क्रमो वर्तत इति निर्विवादम्।

इत्थं सुस्पष्टं भवति यद् वायुगतेः क्रमस्य पर्यवेक्षणादध्ययनाच्च मेघानां वृष्ट्यादेरपि क्रमो ज्ञातो भवति। अतएव प्राच्यैः भाविनां वृष्ट्यादीनाम् ऋतुपरिवर्तनानां ज्ञानाय वायुगतिमाश्रित्य विविधानि पर्यवेक्षणानि कृतानि, तेभ्योऽधिगतानि फलानि च वर्णितानि। ईदृशी या काऽपि सामग्री प्राच्य-संस्कृत-ग्रन्थेषूपलब्धा तस्याः विवरणं द्वादशमासेषु वृष्टिगर्भ-सम्बन्धिनां पर्यवेक्षणानां वर्णनप्रसङ्गे यथावसरं प्रस्तोष्यते। अत्र तावत् कालविशेषे पर्वविशेषे वा कृतानि वायुगतिसम्बन्धीति पर्यवेक्षणान्युदाहरणरूपेणोपन्यस्यन्ते—

## भाविवत्सरीयवृष्टिज्ञानाय पौषे वायुगतेरध्ययनम्—

महर्षिणा पराशरेण भाविवत्सरीयवृष्टेर्ज्ञानाय पौषमासे वायुगतेरध्ययनस्य विधिर्वर्णितः। अत्र तावत् पौषमासस्य द्वादशविभागान् कृत्वा प्रत्येकं सार्द्धदिवसद्वयं पौषादरभ्य द्वादशमासानां प्रतीकरूपेणादेयम्। अयमाशयः पौषस्यारम्भे सार्द्धदिवसद्वयमितः कालः पौषमासीयः कालो ज्ञेयः। अत्र सार्द्धदिवसद्वयमितस्य कालस्य त्रिंशद्भागेषु विभागः कर्तव्यः। अयं त्रिंशद्भागेष्वन्यतम पञ्चदण्डात्मकः कालः प्रत्येकं पौषमासीयदिवसस्य प्रतिनिधिरूपेण ज्ञेयः। अत्रापि सार्द्धदण्डद्वयात्मकः पूर्वार्द्धभागो वासरस्य, पश्चार्द्धभागश्च निशायाः प्रतिनिधित्वेन ज्ञेयः। इत्थं पौषमासे क्रमशः पौषादारभ्य मार्गशीर्ष यावत् समेषां मासानां रात्रिदिवसयोः प्रतिनिधिभूतः कालो ज्ञातव्यः। उक्तं भाविवत्सरप्रतिनिधिभूतं कालमादाय तत्र तत्र वायुगतिं दृष्ट्वा वायुगत्यनुरूपा भाविवत्सरीया वृष्टिर्ज्ञाता भवति। अत्र सौम्ये वारुणे वा वायौ वृष्टिः, पूर्वे याम्ये वा वायौ अवृष्टिः, वायोरभावे वृष्टिहानिः, वायौ अनियमिते विविधदिग्गते अनियमिता च वृष्टिर्जायते। तथा हि—

> 'सार्द्धं दिनद्वयं मानं कृत्वा पौषादिना बुधः।
> गणयेन्मासिकीं वृष्टिमवृष्टिं वाऽनिलक्रमात्॥

---

१. कृषिपराशरः। पृ० ८, ९। श्लो० ३०-३३॥

सौम्यवारुणयोर्वृष्टिरवृष्टिः पूर्वयाम्ययोः ।
निवाते वृष्टिहानिः स्यात् सङ्कुले सङ्कुलं जलम् ॥
एकैकं पञ्चदण्डेन मासस्य दिवसो मतः ।
पूर्वार्द्धे वासरीवृष्टिरुत्तरार्द्धे च नैशिकी ॥
दत्वा दण्डे पताकां तु वातस्यानुक्रमेण च ।
विज्ञेया मासिकी वृष्टिः कृत्वा यत्नमहर्निशम् ॥

## फाल्गुने वायुगतिसम्बन्धीनि पर्यवेक्षणानि—

उक्तविधानि बहूनि वायुगति-सम्बन्धीनि पर्यवेक्षणानि भारतीयैः कृषकैः साम्प्रतमपि पारम्परिकरूपेण प्रयुक्तानि दृश्यते । होलिकादाहकाले भारतीयाः कृषका होलिकाज्वालाया गमनदिशं वीक्ष्य भाविवृष्ट्यादीनामनुमानं कुर्वन्ति । तथा हि हिन्दीभाषायां भड्डरोक्तिरूपेण प्रसिद्धा उक्तिर्द्रष्टव्या —

[1]होली झर कौ करौ विचार ।
शुभ अरु अशुभ कहा फल-सार ॥
पच्छिम वायु बहै अति सुन्दर ।
समया निपजै सजल वसुन्धर ॥
पूरब दिसि की बहै जो बाय ।
कछु भीजै कछु कोरो जाय ॥
दक्खिन बाय बहै वध-नाश ।
समया उपजै सनई घास ॥
उत्तर बाय बहै दड़बड़िया ।
पिरथी अचूक पानी पड़िया ॥
जोर झकोरै चारौ बाय ।
दुखड़ा परिया जीव डेराय ॥
जो पै भरो अकामै जाय ।
तौ पिरथी सङ्ग्राम कराय ॥

---

१. घाघ और भड्डरी । पृ० १००-१०१ । पद्यसंख्या १६१ ॥

**चैत्रे वायुगतिसम्बन्धीनि पर्यवेक्षणानि—**

चैत्रमासेऽपि तासु तासु तिथिषु वायुगतिं वीक्ष्य भाविवृष्ट्यादीनां ज्ञानं जायते। विषयोऽयं प्राच्यसंस्कृतग्रन्थेषु वर्णित उपलभ्यते। तथा हि—

[1]'चैत्रस्य शुक्लपञ्चम्यामभ्रच्छन्नं यदानभः।
निर्मला वा दिशः सर्वा दृश्यन्ते वायुना युताः॥
गोधूमांस्तत्र गृह्णीयान्महर्घानपि बुद्धिमान्।
सम्प्राप्ते श्रावणे मासि लाभश्च त्रिगुणो भवेत्॥

द्वितीये दिवसे प्राप्ते चैत्रे वायुश्च सर्वतः।
तत्र मेघाः प्रदृश्यन्ते वृष्टिर्भाद्रपदे ध्रुवम्॥
तृतीये दिवसे प्राप्ते उत्तरो यदि मारुतः।
नव मेघाः प्रदृश्यन्ते कार्तिके वृष्टिमादिशेत्॥
चतुर्थे दिवसे प्राप्ते मेघजालं प्रदृश्यते।
दुर्भिक्षं जायते घोरमनावृष्टिर्न संशयः॥
दिनद्वयं यदा वाति वायुर्दक्षिणपश्चिमः।
तदा न दृश्यते धान्यं दुर्भिक्षं चात्र जायते॥

तृतीयायां च पञ्चम्यां वायुः पूर्वोत्तरो यदि।
सर्वशस्यानि जायन्ते प्रजाः कृतयुगोपमाः॥
आर्द्रादिनवनक्षत्रं शुक्ले चैत्रे निरीक्षयेत्।
वाताभ्रगर्जनाम्बूनि विद्युत्तत्र न वर्षति॥

अत्र अन्तिमश्लोकस्य चतुर्थचरणे 'तत्र न वर्षति' इत्यस्यायमाशयो यत् तस्मिन् वार्षिकनक्षत्रे वर्षतौ वृष्टिर्न भवतीति।

**वैशाखे वायुगतिसम्बन्धीनि पर्यवेक्षणानि—**

इत्थमेव वैशाखमासे वायुगतिसम्बन्धीनि पर्यवेक्षणानि तेषां फलानि च प्राच्यैर्वर्णितानि। अत्र पर्यवेक्षणानां फलवर्णने यदा तु धान्योत्पत्तिकाले धान्य-

१. गुरुसंहिता। स० भ० पु०। पाण्डुलिपि संख्या ३४७२५। पृ० २१। श्लो० १६५-१७१ तथा १८२॥

विशेषस्य महर्घता वर्णिता तदा तद्धान्यानुकूला वृष्टिर्न भवतीति ज्ञातव्यं; परं यदा धान्यविशेषस्योत्पत्तिकालादनन्तरम्, धान्यान्तरनिष्पत्तिकाले, ततः किञ्चित् प्राग्वा पूर्वधान्यानां महर्घता वर्ण्यते तदा अनन्तरं निष्पद्यमानानां सस्यानामनुकूला वृष्टिर्न भवतीति बोध्यम्। यथा "मासि भाद्रपदे नित्यं महर्घाणि भवन्ती" त्यादिना भाद्रपदे ग्रैष्मिकधान्यानां महर्घताया वर्णनेन आश्विन—मार्गशीषयोः निष्पद्यमानानां शारद्यसस्यानां प्रतिकूला वृष्टिः सूच्यते। तथा हि—

[1]वैशाखे गर्जितं विद्युत् सलिलं पवनो घनः।
उष्णं ज्येष्ठे विशिष्टं स्यात् किमन्यैर्गर्भचेष्टितैः॥
वैशाखशुक्लपञ्चम्यामभ्रच्छन्नं यदा नभः।
गर्जते वर्षते वापि पूर्ववातस्तदा भवेत्॥
उदयास्तमनं यावद् ज्ञातव्यं च विचक्षणैः।
संग्रहेत् सर्वधान्यानि प्रवराणि सुराधिपे॥
मासि भाद्रपदे नित्यं महर्घाणि भवन्ति हि॥

## ज्येष्ठे वायुगतिसम्बन्धीनि पर्यवेक्षणानि—

वर्षर्त्वारम्भात् प्राग् ज्येष्ठे वायुगतेः पर्यवेक्षणं विशिष्टं महत्त्वमाहति। ज्येष्ठस्य शुक्लपक्षे अष्टम्याद्याश्चत्वारो दिवसा वायुधारणादिवसाः कथ्यन्ते। अस्मिन् काले वायुगतेरध्ययनाद् आगामिनो वृष्टिकालस्य वृष्टेर्ज्ञानं भवति। अयं विषयः प्राच्य-संस्कृतग्रन्थेषु विस्तरेण वर्णित उपलभ्यते। अत्रोपस्थाप्यमानेषु पाण्डुलिपीनामुद्धरणेषु भाषा सम्बन्धिन्यस्त्रुट्यो बाहुल्येन वर्तन्ते।

## ज्येष्ठे वायुधारणादिवसेषु वायुगति-सम्बन्धीनि पर्यवेक्षणानि—

[2]ज्येष्ठसितेऽष्टम्याद्याश्चत्वारो वायुधारणा-दिवसाः।
मृदुशुभपवनाः शस्ताः स्निग्धघनस्थगितगगनाश्च॥

विषयेऽस्मिन् मुनिना काश्यपेनापि स्वमतं कथितम्। अत्र वायुधारणा—दिवसानां शुभाशुभत्वं भाविवृष्टिदृष्ट्या कथितम्। तथा हि—

[3]ज्येष्ठस्य शुक्लाष्टम्यां तु नक्षत्रे भगदैवते।
चत्वारो धारणाः प्रोक्ता मृदुवातसमीरिताः॥

---

१. उक्तस्थले। पृ० ४। श्लो० ८७-९०

२. बृहत्संहिता। गर्भधारणाध्यायः। श्लो० १॥

३. उक्तस्थले भट्टोत्पल-टीकायां समुद्धृतम्॥

नीलाञ्जननिभैर्मेघैर्विद्युत्स्थगितमारुतैः ।
विस्फुलिङ्गरजोधूम्रैश्छन्नौ शशिदिवाकरौ ॥
एक रूपाः शुभा ज्ञेया अशुभाः सान्तराः स्मृताः ॥

## धारणदिवसेषु वायुगतेः फलम्—

कालेऽस्मिन् तत्तद्दिग्गतस्य वायोः फलं प्राच्यैः स्वपर्यवेक्षणानुगतं वर्णितम् । तथा हि—

[1]सुभिक्षं पूर्ववातेन जायते नात्र संशयः ।
दक्षिणे तु क्षेमकरो नैर्ऋत्यां दुःखदो भवेत् ॥
वारुण्यां दिव्यधान्यानि वायव्यां वायुखे भवेत् ।
उत्तरे शुभदो देवि ऐशान्यां सर्वसम्पदः ॥

## ज्येष्ठे वायुगत्यादिलक्षणानि—

ज्येष्ठे वायुगति–मेघगर्जनादिलक्षणानि दृष्ट्वा आगामिवृष्टिकालिकवृष्टेः पूर्वानुमानस्य विषयो ग्रन्थान्तरेष्वपि वर्णित उपलभ्यते । अत्रापि शस्यनिष्पत्ति-माश्रित्य वृष्टिफलं वर्णितम् । तथा हि—

ज्येष्ठे प्रत्यूषप्रभवो वायुस्तापकरो रविः ।
अतिवृष्टिं विजानीयात् तस्मिन् वर्षे न संशयः ॥
ज्येष्ठस्य शुक्लपञ्चम्यां गर्जितं श्रूयते यदि ।
दक्षिणस्यां यदा वायुरभ्रच्छन्नं यदा नभः ॥
शस्यानां संग्रहं कुर्यात् त्रिगुणोऽश्विनके भवेत् ॥

## चातुर्मास्यवृष्टिज्ञानाय ज्येष्ठशुक्ले चतुर्दिवसीयानि वायुगतिपर्यवेक्षणानि—

ज्येष्ठशुक्लस्यैकादश्या आरभ्य चतुर्दशीं यावत् कृतेभ्यश्चतुर्दिवसीयेभ्यो वायुगति–पर्यवेक्षणेभ्य आगामिनश्चातुर्मासस्य वृष्टे र्ज्ञानं कर्तुं शक्यते । प्रसङ्गेऽस्मिन् धूपदीपादिभिरुपचारैर्देवपूजनस्य विधिरपि वर्णितः । अत्र धूपदीपाद्युपचा-

१. मेघमाला । स० भ० पु० पाण्डुलिपि सं० ३७२०२ । पृ० ४७ । श्लो० १२–१३ ॥
२. गुरुसंहिता । स० भ० पु० पाण्डुलिपि संख्या ३४७२५ । पृ० २६ ।
श्लो० २०२–२०४ ॥

राणां भौतिकः पक्षोऽपि पूर्वप्रकरणे वर्णितः। धूपदीपादिभिरुपचारैर्वायुमण्डलस्य शोधनं पर्यवेक्षणानां साफल्यसाधकं भवति। बहुशः पार्श्ववर्तिन्यः सान्निध्ये भूगर्भे जायमाना रासायनिकक्रियाः लघुगुरुघनत्वमयानि वायव्यतत्वान्युद्भाव्य स्थल-विशेषस्य वायुमण्डले तात्कालिकीं विकृतिमुत्पादयन्ति। इत्थं वायुगतिसम्बन्धिषु पर्यवेक्षणेषु त्रुटयः सम्भवन्ति। धूपदीपादिभिरुपचारैस्तु वायुमण्डलस्य साधारणी-करणं सम्पद्यत इत्युपचाराणामेतेषां महत्त्वं सर्वथा स्वीकर्तव्यमेव। तथा हि—

ज्येष्ठस्य शुक्लपक्षस्य शृणु देवि कथामिमाम्।
एकादश्यां तिथौ देवि पूजां कुर्यात् सुशोभनाम्॥
शुभ्रं मण्डलकं कृत्वा पुष्पैर्धूपैरलङ्कृतम्।
तेषु स्थानेषु संस्थाप्य महादण्डं महाध्वजम्॥

कृत्वाऽनेन विधानेन शोधयेत् फलनिर्णयम्।
एकवातो यदा वाति चतुर्दिनानि चोत्तरे॥
वर्षर्त्तौ चतुरो मासान् ध्रुवं वर्षति माधवः।
विपरीतं यदा वाति यानि चिह्नानि वायुभिः॥

तानि चिह्नानि वर्षन्ति प्रावृट्काले न संशयः।
यदा तु पश्चिमो वातो जायते च चतुर्दिनम्॥
अनावृष्टिं विजानीयाद् दुर्भिक्षं रौरवं तथा।
उत्तरे दक्षिणे देवि चतस्रो दिशि वा गते॥

चत्वारो वार्षिका मासान् मेघा वर्षन्ति वै भृशम्।
विपरीतं यदा वातश्चतुरो दिशि वा गतः॥
रविमार्ग-परिभ्रष्टः शृणु तस्यापि लक्षणम्।
शीतकाले भवेद् वृष्टिर्वर्षाकाले न विद्यते॥

समवाते भवेत्साम्यं वर्षा काले विनिर्दिशेत्।
वायव्यां पश्चिमे देवि नैर्ऋतं वा यदा तदा॥
आषाढे श्रावणे छिद्रं द्वौ मासौ वृष्टिरुत्तमा।
पूर्वस्यां वा तथैशान्यामाग्नेय्यां वा यदा तदा॥
भाद्रपदाश्विनौ छिद्रमुत्तराषाढश्रावणौ।

## आषाढे वायुगतिसम्बन्धीनि पर्यवेक्षणानि—

पूर्ववदेव आषाढमासेऽपि भाविवृष्टिज्ञानाय वाय्वादिसम्बन्धीनि पर्यवेक्षणानि प्राच्यग्रन्थेषु वर्णितानि । तथा हि—

'आषाढशुक्लपञ्चम्यां पश्चिमो यदि मारुतः ।
गर्जते वर्षते वापि शक्रचापं च दृश्यते ॥
संग्रहेत्सर्वधान्यानि कार्तिके च महर्घता ॥
आषाढे शुक्लपक्षे तु रोहिणीयोग उत्तमः ।
तत्राभ्रं विद्युदम्भो वा काले निष्पद्यते तदा ॥
न वृष्टिः रोहिणीयोगे न चेत्पूर्वोत्तरोऽनिलः ।
वर्षा नैव गृहं ग्रामः पर्याप्तं कृषिलक्षणम् ॥
आषाढे तु यदा मासे द्वादशीप्रतिपद्दिने ।
पूर्णिमायां यदाऽवश्यं शुभो वातः प्रवाति च ॥
सर्वं चैव भवेदन्नं देवो वर्षति भूरिशः ॥

## आश्रावणात्कार्तिकान्तं मासचतुष्टयस्य वृष्टिज्ञानायाषाढे रोहिणीयोगे वायुगति-पर्यवेक्षणानि—

आषाढशुक्ले रोहिणीयोगगते चन्द्रे निर्दिष्टप्रमाणां पताकां विधाय दिक्साधनं कृत्वा प्रहरमितः कालः मासार्द्धप्रतिनिधित्वेन ग्राह्यः । तत्रापि पञ्चदशभिः प्रहरांशैः प्रत्यंशं दिनमेकं कल्पनीयम् । इत्थं रोहिणीयोगे दिनमेकं श्रावण-भाद्र-आश्विन-कार्तिकेति मासचतुष्टस्य प्रतिनिध्यं करोति । इत्थं कालविभागं विधाय वक्ष्यमाणेन विधिना वायुगत्यनुरूपं श्रावण-भाद्र-आश्विन-कार्तिकख्यानां चतुर्णां मासानां वृष्टिफलं ज्ञेयम् । विषयोऽयं वराहमिहिरेण स्वीये वृहत्संहिताग्रन्थे वर्णितः । अत्रैवोक्तवर्णनस्य आधारभूते ऋषिपुत्र-गर्गयोर्मते भट्टोत्पलेन स्वटीकायाम् उद्धृते । तथा हि—

---

मेघमाला । स० भ० पु० पाण्डुलिपि संख्या ३७२०२ । पृ० ४०–४१ ॥

१. गुरुसंहिता । स० भ० पु० पाण्डुलिपिसंख्या ३४७२५ । पृ० ३० । श्लो० २३७ २३९, २४० तथा पृ० ३१ श्लो० २४८ ॥

'श्लक्ष्णां पताकामसितां विदध्याद् दण्डप्रमाणां त्रिगुणोच्छ्रितां च ।
आदौ कृते दिग्ग्रहणे नभस्वान् ग्राह्यस्तया योगगते शशाङ्के ॥

अत्रैव भट्टोत्पलटीकायां दण्डप्रमाणविषये पुराणवचनान्युद्धृतानि । तथा हि—

'चतुर्हस्तो धनुः स्मृतः' ।

धनुः पुनर्दण्डतुल्य इति कथितम् । तथा हि—

धनुर्दण्डो युगं नाली तुल्यान्येतान्यथाङ्गुलैः ॥ इति ॥

दिक्साधनं तावत्पंचसिद्धान्तिकोक्तं भट्टोत्पलेन स्वटीकायामुद्धृतम् । तथा हि—

शङ्कुचतुर्विस्तारे वृत्ते छायाप्रवेशनिर्गमनात् ।
अपरैन्द्रीदिक्सिद्धिर्यवाच्च याम्योत्तरे साध्ये ॥ इति ॥

इत्थमुक्तविधिना चुम्बकयंत्रेण वा दिक्साधनं विधाय वायुगतेरध्ययनार्थं वक्ष्यमाणविधिना कालविभागोऽपि कर्तव्यः । तथा हि—

तत्रार्द्धमासाः प्रहरैर्विकल्प्या वर्षानिमित्तं दिवसास्तदंशैः ।
सव्येन गच्छन् शुभदः सदैव यस्मिन् प्रतिष्ठा बलवान् स वायुः ॥

अत्र सव्येन गच्छन्नित्यस्य पूर्वदिशो दक्षिणदिशं गच्छन्नित्याशयो बोध्यः । अस्मिन् पर्यवेक्षणकाले विविधदिग्गतेषुमारुतेषु यः स्थैर्यं प्रदर्शयति तस्यैव फलं भवति । प्रसङ्गेऽस्मिन् गर्गमतमप्यत्रैव भट्टोत्पलेनोद्धृतम् । तथा हि—

दिनार्धमथवा वायुर्द्वौ मासौ तत्र वर्षति ।
चतुर्भागेन मासं तु शुक्लोऽत्यर्थं प्रवर्षति ॥
पूर्वे चैवार्द्धदिवसे पूर्वौ मासौ तु वर्षति ।
अह्नस्तु पश्चिमे भागे पश्चिमौ द्वौ तु वर्षति ॥
अथ पूर्वं व्यतिक्रम्य भागं तत्पश्चिमं ततः ।
मध्याह्ने वाति चेद् वायुर्मध्यौ मासौ तु वर्षति ॥'

---

१. बृहत्संहिता । रोहिणीयोगाध्याये श्लो० ९-१० । अत्रैव भट्टोत्पलटीकायां समुद्धृतानि गर्ग-ऋषिपुत्रयोर्वचनानि च ॥

भाद्रपदोऽश्वयुक् चैव मासावेतौ तु मध्यमौ ।
एतयोरपि निर्देश्या वर्षारात्रस्य सम्पदः ॥

अत्र गर्गमतानुसारं दिवसे एव पर्यवेक्षणं विधेयं न तु रात्रौ । इत्थं दिवस एव मासचतुष्टयस्य प्रतिनिध्यं करोति । प्रसङ्गेऽस्मिन् भट्टोत्पलेन ऋषिपुत्रवचनमप्युद्धृतम् । तथा हि—

दिनार्द्धं वाति चेद् वायुः पूर्वपश्चिममेव वा ।
मासद्वयं तदा वर्षा विभागः पूर्वपश्चिमे ॥
समये दिवसं वायुर्यदि वाति सुलक्षणः ।
मासास्तु श्रावणाद्या वै तेषां सम्पद् विनिर्दिशेत् ॥
वायन्तं मारुतश्चापि यो वायुः प्रतिवारयति ।
तत्र यो बलवान् वायुस्तस्यैव फलमादिशेत् ॥

इत्थम् ऋषिपुत्रवचनेन वायुदिग्वैविध्येऽपि फलवर्णनं स्पष्टतामेति ।

**आगामिश्रावणादिमासानां वृष्टेर्ज्ञानाय आषाढीयोगे वायुगति-पर्यवेक्षणानि—**

यथा रोहिणीयोगे कृतानि वायुगतिसम्बन्धीनि पर्यवेक्षणानि आगामिषु श्रावणादिमासेषु भाविनीं वृष्टिं सूचयन्ति तथैव आषाढीयोगेऽपि । विषयोऽयं वराहमिहिरकृते बृहत्संहिताग्रन्थे आषाढीयोगाध्याये वर्णितः । आषाढीयोगे पूर्वदिग्गतो वायुश्चेत् सुवृष्टिरन्नानां सुनिष्पत्तिश्च द्योत्यते । आग्नेयवायौ अग्निकोपः, दक्षिणवायौ मन्दा वृष्टिः, नैर्ऋतवायौ मध्यमावृष्टिः, पश्चिमवायौ श्रेष्ठा वृष्टिः, वायव्यवायौ बहुजलपवनावृष्टिः, ईशानवायौ च शुभा वृष्टिर्जायते । तथा हि—

[1]निष्पत्तिरग्निकोपो वृष्टिर्मन्दाऽथ मध्यमा श्रेष्ठा ।
बहुजलपवना पुष्टा शुभा च पूर्वादिभिः पवनैः ॥

**वृष्टिज्ञानार्थमाषाढीपूर्णिमायां सूर्यास्तकाले वायुगतेरध्ययनम्—**

अत्रैव वर्णितं यदाषाढीपूर्णिमायां सूर्यास्तमनकाले ऐशानो वायुरुत्तमां सस्यनिष्पत्तिं द्योतयति । तथा हि—

[2]आषाढ्यां पौर्णमास्यां तु यद्यैशानोऽनिलो भवेत् ।
अस्तं गच्छति तीक्ष्णांशौ सस्यसम्पत्तिरुत्तमा ॥

---

१. बृहत्संहिता । आषाढीयोगाध्यायः । श्लो० १३ ।
२. अत्रैव । श्लो० १५ ॥

## आषाढे गर्गकृतानि वायुगतिपर्यवेक्षणानि--

श्रावणादीनां द्वादशमासानां वृष्टेर्ज्ञानाय गर्गेण आषाढमासे वायुगतिमाश्रित्य पर्यवेक्षणानि कृतानि तेषां फलं च वर्णितम् । अत्र आषाढस्य पूर्णिमादिवसो द्वादश-मासानां प्रतिनिधिभूतो मन्यते । षष्टिघटीमितः कालो यदा द्वादशभागेषु विभाज्यते तदा पञ्चनाडीमितो मासो भवति । इत्थं कालविभागं विधाय वायुगतेरध्ययनं विधीयते । पर्यवेक्षणेष्वेषु वायुगतेरध्ययनेन सहैव मेघादीनामन्येषामपि आकाश-लक्षणानामध्ययनं मुनिना कृतं तेषां स्थितेः फलं च कथितम् । विषयोऽयं प्राच्यग्रन्थेषु वर्णित उपलभ्यते ।

तथा हि---

[1]आषाढे तु घटीषष्ठ्या मासद्वादशनिश्चयः ।
पंचनाडी भवेन्मासः षष्ठ्या वर्षविनिर्णयः ।
सर्वरात्रं यदाभ्राणि वातः पूर्वोत्तरो यदि ।
वर्षे तत्र कणाः पुष्टा जायते जगदीप्सितम् ॥

यदि नाभ्रस्य लेशोऽपि वातः पूर्वोत्तरो न हि ।
न वर्षते तदा मेघो दुष्टकालो भवेदिह ॥
यत्र मासविभागे च निर्मलं दृश्यते नभः ।
तत्र हानिस्त्वनावृष्टिर्विज्ञेयं गर्गभाषितम् ॥

यदाभ्रे पञ्चनाडीषु वायुः पूर्वोत्तरो भवेत् ।
तत्र मासे भवेद् वृष्टिः पवनाभ्रादिमानतः ॥
तत्र रात्रौ च विज्ञेयं वाताद्यं सर्वदिग्गतम् ।
वृष्ट्यादिसहितैरभ्रैः पूर्णिमा सुखदायिनी ॥

दिनरात्रिविभागेन यदाभ्राणि भवन्ति हि ।
तस्मिन् काले ध्रुवं वृष्टिः ऋतुनाडीप्रमाणतः ॥
येषु मासेषु ये दग्धाः गर्भाः पौषादिसम्भवाः ।
तद्रात्रौ पञ्चानाडीषु चन्द्रो भवति निर्मलः ॥

---

१. गुरुसंहिता । स० भ० पु० पाण्डुलिपि संख्या ३४७२५ । पृ० ६-३७ । श्लो० २८७-२६७ ॥

पौषादिसम्भवो गर्भो ध्रुवमुत्पातसम्भवः ।
सिताषाढीदिनं सर्वं द्रष्टव्यं वृष्टिहेतवे ॥
यद्याषाढीदिने रात्रौ वाताभ्रादि शुभं भवेत् ।
तदा गर्भाः शुभा ज्ञेयाः शीतकालेऽपि धीमता ॥
एकमेव दिनं प्रेक्ष्य कालनिष्पत्तिहेतवे ।
अष्टयामाभ्रवातैश्च वर्षं यावत्तदा शुभम् ॥

**आषाढीपूर्णिमायां सूर्यास्तकाले गर्गकृतानि पर्वणेक्षणानि**[1]—

आषाढ्यां भास्करास्ते सुरपतिककुभो वाति वातः सुवृष्टिः ।
शस्यध्वंसं प्रकुर्याद् दहनदिशिगतो मन्दवृष्टिर्यमेन ॥
नैर्ऋत्यां मध्यशस्यं वरुणदिशि जलं वायुना वायुकोपः ।
कौवेर्यां शस्यपूर्णा भवति वसुमती तद्वदीशानवाते ॥
आषाढ्यां पूर्ववातेन सर्वशस्या च मेदिनी ।
आषाढ्यामग्निवातेन अस्थिशेषा मही भवेत् ॥
आषाढी पौर्णमास्यां तु दक्षिणो यदि मारुतः ।
तदा सुभटकोटीनां मही पिबति शोणितम् ॥
आषाढ्यां नैर्ऋतो वायुर्यदि तत्र प्रदृश्यते ।
विक्रयित्वा तदा सर्वं कर्तव्यो धान्यसंग्रहः ॥
आषाढ्यां वारुणे वाते वृष्टिः शस्यं भवेद् ध्रुवम् ।
शलभादि च वायव्ये मशकाश्च पतन्ति हि ॥
उत्तरे मारुते लोका गीतवाद्यशुभैर्युता ।
ऐशाने मारुतो वाति समर्घं प्रचुरं भवेत् ॥
आषाढ्यां पौर्णमास्यां तु ईशानो मारुतो भवेत् ।
अस्तं गच्छति शीतांशौ शस्यसम्पत्तिरुत्तमा ॥
यावद् हंससमा मेघा यावदग्निसमो रविः ।
यावत्कौवेरको वायुस्तावन्मेघः प्रवर्षति ॥

---

१. अत्रैव । पृ० ३८-३९ । श्लो० १०२-११२

यावत्काकोदरा मेघा यावच्चन्द्रसमो रविः ।
यावच्च नैर्ऋतो वायुस्तावन्मेघो न वर्षति ॥
शुचौ कृष्णचतुर्थ्यां तु तुषारानपि पातयेत् ।
जलपक्षे तथा सर्वं शस्यं भवति भूतले ॥

## पराशरकृतानि वायुगतिपर्यवेक्षणानि—

मुनिना पराशरेणापि आषाढीपर्वकालिकवायुगतिपर्यवेक्षणानां विषये स्वीये कृषिशास्त्रग्रन्थे स्वमतं कथितम् । तथा हि—

[1]आषाढ्यां पौर्णमास्यां सुरपतिककुभो वाति वातः सुवृष्टिः ।
सस्यध्वंसं प्रकुर्याद् दहनदिशिगतो मन्दवृष्टिर्यमेन ॥
नैर्ऋत्यां शस्याहानिर्वरुणदिशिजलं वायुना वायुकोपः ।
कौवेर्यां शस्यपूर्णां प्रथयति नियतं मेदिनीं शम्भुना च ॥इति॥

प्रसङ्गेऽस्मिन्, वराहमिहिरकृते बृहत्संहिताग्रन्थे वातचक्राध्याये समुलब्धं वर्णनमपि तावद् द्रष्टव्यम् । आषाढीपर्वकाले वायुगतिमाश्रित्य प्राच्यैः कृतानां पर्यवेक्षणानां फलानि अध्यायेऽस्मिन् सविस्तरं वर्णितानि । अस्याध्यायस्य भट्टोत्पलकृता टीका नोपलभ्यत इति केषाञ्चिन्मते प्रक्षिप्तोऽयमध्यायः । वस्तुतोऽत्र त एव विषया विस्तरेण वर्णिता येषां वर्णनं संक्षेपेण ग्रन्थस्यास्य आषाढीयोगाध्याये त्रयोदशश्लोके कृतं विद्यते । तथा हि [2]पूर्ववायौ--

पूर्वं पूर्वसमुद्रवीचिशिखरप्रस्फालनाघूर्णित
श्चन्द्रार्कांशुसटाकलापकलितो वायुर्यदाकाशतः ।
नैकान्तस्थितनीलमेघपटला शारद्यसंवर्धिता ।
वासन्तोत्कटसस्यमण्डिततला सर्वा महीशोभते ॥

आग्नेयवायौ—

यदाऽऽग्नेयो वायुर्मलयशिखरास्फालनपटुः
प्लवत्यस्मिन् योगे भगवति पतङ्गे प्रवसति ।

१. कृषिपराशरः । पृ० १० । श्लो० ५६ ॥
२. बृहत्संहिताया वातचक्राख्ये सप्तविंशाध्याये श्री वी० सुब्रह्मण्यशास्त्री श्री एम० रामकृष्णभट्टकृते १९४७ ईशवीये प्रकाशने पृ० २४४-२२७ । श्लो० १-७ तथा ६ ॥

तदा नित्योद्दीप्ता ज्वलनशिखरालिङ्गिततला,
स्वगात्रोष्मोच्छ्‌वासैर्वमति वसुधा भस्मनिकरम् ॥

दक्षिणवायौ—

तालीपत्रलताविताननतरुभिः शाखामृगान्नर्तयन्,
योगेऽस्मिन् प्लवति ध्वनिः सपरुषो वायुर्यदा दक्षिणः ।
तद्‌द्योगसमुत्थितस्तु गजवत्तालाङ्कुशैर्घट्टिताः,
कीनाशा इव मन्दवारिकणिका मुञ्चन्ति मेघास्तदा ॥

नैर्ऋतवायौ—

सूक्ष्मैलालवलीलवङ्गनिचयान् व्याघूर्णयन् सागरे,
भानोरस्तमये प्लवत्यविरतो वायुर्यदा नैर्ऋतः ।
क्षुत्तृष्णावृतमानुषास्थिशकलप्रस्तारभारच्छदा,
मत्ता प्रेतवधूरिवोग्रचपला भूमिस्तदा लक्ष्यते ॥

पश्चिमवायौ—

यदा रेणूत्पातैः प्रविचलसटाटोपचपलः,
प्रवातः पश्चाच्चेद्दिनकरकरापातसमये ।
तदा सस्योपेता प्रवरनिकराबद्धसमरा,
क्षितिः स्थानस्थानेष्वविरतवसामांसरुधिरा ॥

वायव्यवायौ—

आषाढीपर्वकाले यदि किरणपतेरस्तकालोपपत्तौ,
वायव्यो वृद्धवेगः पवनघनवपुः पन्नगार्धानुकारी ।
जानीयाद् वारिधाराप्रमुदितमुदितामुक्तमण्डूककण्ठां,
सस्योद्भासैकचिह्नां सुखबहुलतया भाग्यसेनामिवोर्वीम् ॥

उत्तरवायौ—

मेरुग्रस्तमरीचिमण्डलतले ग्रीष्मावसाने रवौ,
वात्यामोदिकदम्बगन्धसुरभिर्वायुर्यदा चोत्तरः ।
विद्युद्भ्रान्तिसमस्तकान्तिकलना मत्तास्तदा तोयदाः
उन्मत्ता इव नष्टचन्द्रकिरणां गां पूरयन्त्यम्बुभिः ॥

ऐशानवायौ—

ऐशानो यदि शीतलोऽमरगणैः संसेव्यमानो भवेत्,
पुन्नागागरुपारिजातसुरभिर्वायुः प्रचण्डध्वनिः ।
आपूर्णोदकयौवना वसुमती सम्पन्नसस्याकुला,
धर्मिष्ठाः प्रणतारयो नृपतयो रक्षन्ति वर्षास्तदा ॥

अंशस्यास्य प्रक्षिप्तत्वपक्षेऽपि प्रतीयते यत्केनापि विदुषा पर्यवेक्षणानामेतेषां परीक्षणं विधाय एतद्विषयकाः स्वानुभवा विस्तरेण वर्णिताः सन्ति ।

## नारदमते आषाढपूर्णिमायां सूर्यास्तकालिकवायुगतिपर्यवेक्षणानि—

विषयस्यास्य विशदं वर्णनं नारदकृते मयूरचित्रकग्रन्थेऽप्युपलभ्यते । ग्रन्थोऽयमद्यावधि अप्रकाशितः । अस्य हस्तलिखिता प्रतिः सरस्वतीभवन-पुस्तकालये विद्यते । अत्र लिपिकारस्य त्रुटिवशाद् भाषा बहुशोऽशुद्धा पाठश्च खण्डितो विद्यते । तथा हि[१]—

आषाढमासस्य च पौर्णमास्यां सूर्यास्तकाले यदि वाति वायुः ।
पूर्वस्तदा सस्ययुता च मेदिनी नन्दन्ति लोका जलदायिनो घनाः ॥
कृशानुवायौ मरणं प्रजानामन्नस्य नाशः खलु वृष्टिनाशः ।
याम्ये मही सस्यविवर्जिता स्यात् कष्टं परं यान्ति नृपा विनाशम् ॥
नैशाचरो वाति यदाऽत्रवातो न वारिदो यच्छति वारि भूरि ।
तदा मही सस्यविवर्जिता स्यात्क्रन्दन्ति लोकाः क्षुधया प्रपीडिताः ।
आषाढमासे यदि पौर्णमास्यां सूर्यास्तकाले यदि वारुणोऽनिलः।
प्रवाति नित्यं सुखिनः प्रजाः स्युर्जनान्नयुक्ता वसुधा तदा स्यात् ॥
वायव्यवाते जलदागमः स्यादन्नस्य नाशः पवनोद्धता च ।
सौम्येऽनिले धान्यजलाकुला धरा नन्दन्ति लोका भयदुःख वर्जिताः ॥
ऐशेन वृद्धिर्बहुवारिपूरिता धरा च गावो बहुदुग्धसंयुताः ॥
भवन्ति वृक्षाः फलपुष्पदायिनो वातेऽभिनन्दन्ति नृपाः परस्परम् ॥

---

१. मयूर चित्रकम् । सरस्वतीभवन-पुस्तकालयसंग्रहे पाण्डुलिपि सं० ३४३३२ । पृ० ११-१२ । श्लो० ७७-८३ ।

आषाढीयोगोऽयं सम्यक्प्रोक्तो मुनिमतं समालोक्य ।
यज्ज्ञात्वा दैवविदो लोके ख्यातिं समायान्ति ॥

## आषाढीपूर्णिमापर्यवेक्षणेषु रुद्रयामलमतम्--

विषयोऽयं रुद्रयामलान्तर्गते सारोद्धारे ईश्वरपार्वतीसंवादरूपेण वर्णितः इति सरस्वतीभवनपुस्तकालयस्य पाण्डुलिपिसंग्रहे सङ्गृहीताद् मेघमालेतिनामकग्रन्था-ज्ज्ञायते । ग्रन्थोऽसद्यावधि अप्रकाशितः । अत्रत्याद् वर्णनाद् विषयोऽयं स्पष्टतरो भवति । अत्र लिपिकृतस्त्रुटिवशाद् बह्वयो भाषासम्बन्धिन्यस्त्रुटयः सन्ति । तथा हि—

[1]'आषाढी पूर्णिमायां तु पूर्ववातो यदा भवेत् ।
निष्पत्तिः सर्वधान्यानामारोग्यं च भविष्यति ॥
आषाढ्यामग्निवातं चेदस्थिशेषा मही तदा ।
आषाढीपूर्णिमायां तु दक्षिणो यदि मारुतः ॥
सकूपेषु तडागेषु तथा निर्झरणेषु च ।
तदा न दृश्यते तोयं देवि देवो वर्षति ॥
आषाढी पूर्णिमायां तु नैऋत्यां यदि मारुतः ।
विक्रयित्वा तदा सर्वं कर्तव्यो धान्यसङ्ग्रहः ॥
आषाढी पूर्णिमायां तु पश्चिमो यदि मारुतः ।
निष्पत्तिः सर्वधान्यानां लोके वर्षति माधवः ॥
आषाढीपूर्णिमायां तु वायव्यां यदि मारुतः ।
नकुलाः शलभाश्चैव मूषकाश्च पतन्ति वा ॥
आषाढीपूर्णिमायां तु उत्तरो यदि मारुतः ।
धर्मशीलास्तदा लोका धनं धान्यं गृहे गृहे ॥
आषाढीपूर्णिमायां तु उत्तरो यदि मारुतः ।
गीतवाद्यरता लोकाः सुभिक्षं प्रबलं भवेत् ॥
आषाढीपूर्णिमायां तु चतुर्दिक्षु च मारुतः ।
धान्यानि च महर्घ्याणि वह्निदाहः प्रकीर्तितः ॥

---

१. मेघमाला । सरस्वतीभवनपुस्तकालय–पाण्डुलिपि–संख्या ३७२०२ । पृ० ४४ । श्लो० ४२-५४ ॥

आषाढीत्वधिका तस्य समर्घं तु तदा मतम् ।
संवत्सरो वर्तमानः शून्ययातः सुनिष्फलः ॥
निर्वातगगना देवि यदाषाढस्य पूर्णिमा ।
तदा तु सर्वमेदिन्यां जलं नास्तीति कथ्यते ॥
पूर्णिमायां यदा देवि इन्द्रचिह्नं प्रदृश्यते ।
अस्तं गच्छति तीक्ष्णांशौ सस्यसम्पत्तिरुत्तमा ॥ इत्यादि ॥

**आषाढीपूर्णिमापर्यवेक्षणेषु वनमालामतम्**[1]—

प्राच्यानां मतान्याश्रित्य मैथिलविदुषा जीवनाथेन विरचितोऽयं ग्रन्थः सम्प्रति दुर्लभः। अस्यैका पाण्डुलिपिर्मैथिलीलिप्यामपरा च देवनागरीलिप्यां सरस्वतीभवन-पुस्तकालयस्य पाण्डुलिपिसङ्ग्रहे वर्तते। अत्रापि लिपिकृतस्त्रुटिवशाद् बह्व्योऽशुद्धयः सन्ति। इत्थमनेकत्र आशयोऽप्यस्पष्टः। तथा हि—

शुचिवलक्षदलान्ततमीमुखे यदि वहत्यनिलो हरिदिग्भवः ।
जलमलं सृजति क्षितिमण्डले बहुमुदं बहुधा वसुधाभृतः ॥
अनलकोणभवो यदि मारुतो वहति मन्दजवो रजनीमुखे ।
वमति भस्मकृशानुशिखाकुला वदनतः परितोऽपि वसुन्धरा ॥
दिनकरे विकरे परिघट्टयन् दिवि घनं यदि दक्षिणमारुतः ।
प्लवति मन्दपयः कणिकामतो भुवि भयं जनयन् तनुतेऽम्बुदः ॥
असुरकोणभवः क्षणदामुखे वहति चेदनिलो विजलोऽम्बुदः ।
अतिकरालकपालकुलावृता वसुमती रुदतीव विलक्ष्यते ॥
वरुणवायुरिला रजसां कणानिकरमुग्रजवो द्रुतमुत्क्षिपन् ।
वहति चेदभितो धरणीभृतो भुजबलं सकलं व्रजति क्षयम् ॥
अनिलकोणभवः पवनो यदा वहति सायमिला विमला भवेत् ।
अतितरां नवनीरदधारया फलमया हि तया भुविपादपाः ॥
सति निशावदने गगने रवौ चलित उत्तरतः शुचिपर्वणि ।
वहति मन्दगतिः पवनोः धरारवधरासितवारिधराकुला ॥

---

१. बनमाला। स० भ० पु० पाण्डुलिपि–संख्या ३५३६५। पृ० १-२, श्लो० १२-१६॥

दिनपतावपरान्तितिजं गते, वहति शङ्करकोणभवोऽनिलः ।
वसुमती मुदिता नवशस्य-गोकुलपदैर्जलदैरभिलक्ष्यते ॥

**आषाढोपर्यवेक्षणैः सम्बद्धा लोकोक्तयः —**

संस्कृतग्रन्थेषु वर्णिता इमे विषयाः संस्कृतह्रासस्य काले जनैः क्षेत्रीयभाषासु लोकोक्तिरूपेणानुवादरूपेण वा वर्णिताः । हिन्दीभाषाविद्भिः घाघभड्डरादीनां कृतयस्तेषां मौलिक्यः कृतयो मन्यन्ते । वस्तुतः, इमाः कृतयः प्राच्यसंस्कृतग्रन्थानामनुवादभूताः सन्ति । प्रसङ्गेऽस्मिन् पूर्ववर्णितस्यांशस्यानुवादभूता भड्डरोक्तय उदाहरणरूपेण अत्रोपन्यस्यन्ते । तथा हि—

'आषाढमास पुन ( पूर्णिमा ) गौना ।
धुजा बाँधि कै देखौ पौना ॥
जो पै पवन पुरब से आवै ।
उपजै अन्न मेघ भरि लावै ॥
अगिन कोन जो बहै समीरा ।
पड़ै काल दुख सहै शरीरा ॥
दखिन बहै जल-थल अलगीरा ।
ताहि समै जूझैं बड़ वीरा ॥
नैऋत कोन बूंद ना परै ।
राजा परजा भूखौं मरै ॥
पश्चिम बहै नीक कर जानो ।
पड़ै तुषार तेज डर मानो ॥
वायब बह जल थल अति भारी ।
मूस उगाह दण्ड बस नारी ॥
उत्तर उपजै बहु घन धान ।
खेत बात सुख करै किसान ॥
कोन इसान दुंदुभी बाजै ।
दही भात भोजन सब गाजै ॥

१. घाघ और भड्डरी । पृ० १०३ पद्यसंख्या १६६ ॥

अन्यच्चापि--

[1]आसाढी पूनौ की सांझ। वायु देखिये नभ के मांझ ॥
नैऋत भई बूंद ना परै। राजा परजा भूखौं मरै ॥
अगिन कोन जो बहै समीरा। पड़ै काल दुख सहै सरीरा ॥
उत्तर से जल फूहौं परै। मूस सांप दोनौ अवतरै ॥
पश्चिम समै नीक करि जान्यौ। आगे परै तुपार प्रमान्यौ ॥
जो कहुं बहै इसाना कोना। उपजै विस्वा दो दो दोना ॥
जौ कहुँ हवा अकासे जाय। परै न बूंद काल परि जाय ॥
दक्खिन पच्छिम आधौ समयौ। भड्डर जोसी ऐसौ भन्यौ ॥

## श्रावणादिषु मासेषु कृष्यनुकूलवृष्टेरनुरूपा वायुगतिः —

संस्कृतग्रन्थेषु वर्णितां श्रावणादिमासेषु शस्तां वायुगतिमधिकृत्य भड्डरोक्तिरूपेण प्रसिद्धा लोकोक्तिः भारतीयैः कृषकैः सम्यक् स्मर्यते तथा हि--

[2]सावन पछिवा भादौं पुरवा, आसिन बहै इसान।
कातिक कन्ता सींक न डोलै, गाजै सबै किसान ॥

इत्थं श्रावणे पश्चिमो मारुतः, भाद्रपदे पूर्वो मारुतः, आश्विने ईशानकोणभवो मारुतः, कार्तिके च मारुतकोपाभावः प्रशस्तां वृष्टिं जनयति।

## वृक्षगुल्मलतादीनां लक्षणेभ्यो वृष्ट्यादेर्ज्ञानम्—

यथा वृष्ट्यादीनि ऋतुपरिवर्तनानि भूमण्डले, भुवो वायुमण्डले च जातानां तापक्रमपरिवर्तनानां, तदनुगतानां मेघमारुतादिगतपरिवर्तनानाञ्चानुसरणं कुर्वन्ति तथैव भूमण्डले जातेषु वृक्षवनस्पत्यादिष्वपि तापक्रममेघमारुतादीनां प्रभावो विविधानि परिवर्तनानि जनयति। वृक्षवनस्पत्यादीनां जीवनक्रिया हि भूमण्डले भुवो वायुमण्डले च विद्यमानं तापक्रमं, सूर्यप्रकाशं, वायुं, जलं चाश्रित्य प्रचलति। पादपा हि स्वमूलैर्भूगर्भस्थं जलमादाय स्वां जीवनक्रियां निर्वर्तयन्ति। परमस्य महतो जलराशेरुपरिनयनाय या महती शक्तिरपेक्षिता भवति सा पादपानां पत्रेषु जायमानया वाष्पीकरणप्रक्रियया एवोद्भाव्यते। वायुमण्डले पादपपत्रेषु जायमानया वाष्पीकरणप्रक्रियया पादपशरीरवर्तिनो जलस्य वाष्परूपेण परिणमनात् यथा यथा शून्यं स्थान-

---

१. घाघ और भड्डरी। पृ० १०४ पद्यसंख्या १६७ ॥
२. घाघ और भड्डरी। पृ० १०१। पद्य १६१ ॥

मुत्पद्यते तथा तथा वायुमण्डलीयवायोः भारस्य प्रभावाज्जलं सुदूरमुपरि पादपपत्रेषु याति । जलस्य, कार्बन–डाई-ऑक्साइड–इत्याख्यस्य वायव्य–यौगिकस्य च संयोगाद् या वृक्षाणां भोजननिर्माणक्रिया पादपपत्रेषु सम्पद्यते साऽपि सूर्यकिरणैर्विना न भवितुमर्हति । इत्थं पादपानां समग्राऽपि जीवनक्रिया जल-वायु-सूर्यताप-सूर्यप्रकाशादिषु समाश्रितावर्तते । अतो वायुमण्डले जायमानानि ऋतुपरिवर्तनानि वृक्षवनस्पत्यादिषु स्पष्टं परिलक्षितानि भवन्ति ।

## वत्सरीयवृष्टिसूचकानि पादपलक्षणानि—

प्राच्यै र्विद्वद्भिर्मनीषिभिश्च भाविनां वृष्ट्यादीनां ज्ञानाय वृक्षवनस्पत्यादीनां विविधानां चेष्टानां गभीरमध्ययनमकारि । विषयेऽस्मिन् स्वीया अनुभवाश्च वर्णिताः । तद्यथा वराहमिहिरेण प्राच्यानां मतमाश्रित्य वत्सरीयवृष्टिसूचकाः पादपानां चेष्टा वर्णिताः । तथा हि—

**[1]यस्मिन् काले स्निग्धनिश्छिद्रपत्राः सन्दृश्यन्ते वृक्षगुल्मा लताश्च ।**
**तस्मिन् वृष्टिः शोभना सम्प्रदिष्टा रूक्षैश्छिद्रैरल्पमम्भः प्रदिष्टम् ॥**

प्रसङ्गेऽस्मिन् भट्टोत्पलेन स्वटीकायां वराहमिहिरोक्तेराधारभूतं पराशरवचनमप्युद्धृतम् । तथा हि—

**अच्छिद्रपत्राः सुस्निग्धाः फलपुष्पसमन्विताः ।**
**निर्दिशन्ति शुभं वृक्षाः विपरीतं विगर्हिताः ॥ इति ॥**

## विविधवृक्षसमृद्धेर्वृष्ट्यादिज्ञानम्—

विविधाः पादपाः स्वलक्षणैर्विविधानि भावीनि ऋतुपरिवर्तनानि सूचयन्ति । एतेषामपि वर्णनं वराहमिहिरेण स्वग्रन्थे कृतम् । तद्यथा आम्रवृक्षस्य पुष्पादिसमृद्धिः प्राणिनां क्षेमं सूचयति; भल्लातकसमृद्धिर्हि भयहेतुं सूचयति; पीलुसमृद्ध्यां प्राणिनामारोग्यं च सूच्यते । अत्र हि क्षेमं सुवृष्टिसूचकम्, भयमनवसरवृष्ट्यनावृष्ट्यादिसूचकम्, आरोग्यं च उचितकाले वृष्टिं सूचयति । खदिर-शम्योः समृद्धिर्दुर्भिक्षमनावृष्टिं वा सूचयति । अर्जुनसमृद्धिः शोभनां वृष्टिं सूचयति अत्रैव पिचुमन्दनागयोः पुष्पसमृद्धिः सुभिक्षं सुवृष्टिं वा सूचयति । कपित्थसमृद्ध्या मारुतोत्पाताः सूच्यन्ते । निचुलसमृद्ध्या अनावृष्टिः; कुटजसमृद्ध्या च विविधव्याधीनां कारणभूता अकालवृष्टिः सूच्यते । तथा हि—

१. बृहत्संहिता । कुसुमलताऽध्यायः ॥ श्लो० १४ ॥

[1]आम्रैः क्षेमं भल्लातकैर्भयं पीलुभिस्तथाऽऽरोग्यम् ।
खदिरशमीभ्यां दुर्भिक्षमर्जुनैः शोभना वृष्टिः ॥
पिचुमन्दनागकुसुमैः सुभिक्षमथ मारुतः कपित्थेन ।
निचुलेनावृष्टिभयं व्याधिभयं भवति कुटजेन ॥

**पादपानां तात्कालिकपरिवर्तनेभ्यो वृष्टिज्ञानम्—**

वृष्टिकाले पादपेषु जातानि तात्कालिकानि परिवर्तनानि सद्योभाविनीं वृष्टिं सूचयन्ति । तथा हि—

[2]लता च गगनोन्मुखी कलितपुष्पगर्भा यदा ।
तदा भुवि समन्ततो ददति वारि धाराधराः ॥

तथैव वराहमिहिरोक्तिरपि—

[3]वल्लीनां गगनतलोन्मुखाः प्रवालाः ।
... ... ...
आसन्नो भवति तदा जलस्य पातः ॥ इत्यादि ॥

**पशुपक्षिणां चेष्टाभ्यो वृष्ट्यादेर्ज्ञानम्—**

यथा पादपानां तथैव पशु-पक्षि-कीट-सरीसृपादीनां प्राणिनामपि जीवनक्रियाः भूमण्डलगतैर्वायुमण्डलगतैश्च मेघ-मारुत-तापक्रमादीनां परिवर्तनैः प्रभाविता भवन्ति । वस्तुतः पशुपक्षिकीटसरीसृपादीनां चेष्टास्तु निसर्गप्रेरिता एव भवन्ति । अतः पशुपक्षिकीटसरीसृपादीनां चेष्टाभ्योऽपि भूमण्डले, वायुमण्डले च जायमानानां मेघमारुतादिसम्बन्धिनाम् ऋतुपरिवर्तनानां ज्ञानं प्राप्तुं शक्यते । इदमेव वैज्ञानिकं रहस्यं मनसि निधाय प्राच्यैः ऋतुवैज्ञानिकैः पशुपक्षिकीटसरीसृपादीनां चेष्टाः सम्यगधीताः । तासु चेष्टासु च यो मेघमारुतादिगतपरिवर्तनानां प्रभावो दृष्टस्तस्मिन् विषये स्वीया अनुभवाः प्रकाशिताः । प्राच्यानामेते अनुभवाः प्राच्यग्रन्थेषु वर्णिता उपलभ्यन्ते । तथा हि—

---

१. अत्रैव । श्लो० ११-१२ ॥

२. वनमाला । स० भ० पु० पाण्डुलिपि–संख्या ३५३६५ । पृ० २ । द्वितीयाध्याये श्लो० १० ॥

३. बृहत्संहिता । सद्योवर्षणाध्यायः । १३ ॥

**पराशरवर्णिताः पशुपक्षिकीटादीनां वृष्टिसूचिकाश्चेष्टाः—**

[१]जलस्थो जलहस्तो वा निकटेऽथ जलस्य वा ।
दृष्ट्वा पृच्छति वृष्ट्यर्थं वृष्टिः संजायतेऽचिरात् ॥
उत्तिष्ठन्त्यण्डमादाय यदा चैव पिपीलिकाः ।
भेकः शब्दायतेऽकस्मात् तदा वृष्टिर्भवेद् ध्रुवम् ॥
विडालाः नकुलाः सर्पा ये चान्ये वा बिलेशयाः ।
धावन्ति शलभा मताः सद्योवृष्टिर्भवेद्ध्रुवम् ॥
कुर्वन्ति बालका मार्गे धूलिभिः सेतुबन्धनम् ।
मयूराश्चैव नृत्यन्ति सद्योवृष्टिर्भवेद् ध्रुवम् ॥
आघातवातदुष्टानां नृणामङ्गे व्यथा यदि ।
वृक्षाग्रारोहणं चाहेः सद्योवर्षण-लक्षणम् ॥
पक्षयोः शोषणं रौद्रे खगानामम्बुचारिणाम् ।
झिन्झीरवस्तथाऽऽकाशे सद्योवर्षणलक्षणम् ॥

**नारदवर्णिताः पशुपक्षिकीटादीनां वृष्टिसूचिकाश्चेष्टाः—**

[२]नखैर्लिखन्ति मार्जाराः पृथिवीं यत्तदा भृशम् ।
शब्दं कुर्वन्ति मण्डूकास्तदा स्याद् वृष्टिरुत्तमा ॥
सेतुं कुर्वन्ति रथ्यायां शिशवो मलिना यदा ।
पिपीलिका यदाण्डानि गृहीत्वा च प्रयाति वै ॥
सर्पा वृक्षं यदा यान्ति तदा बहुजलप्रदाः ॥
[२]गावः सूर्यं निरीक्षन्ति कृकलासगणास्तथा ।
गृहान्नेच्छन्ति पशवो निर्गमं कुक्कुरास्तथा ॥
लताश्चोर्ध्वमुखाः सर्वाः स्नानं कुर्वन्ति पक्षिणः ।
पांशुभिश्च तृणाग्राणि सेवन्ते वै सरीसृपाः ॥

---

१. कृषिपराशरः । पृ० १७-१९ । श्लो० ६५-७० ॥
२. मयूरचित्रकम् । स० भ० पु० पाण्डुलिपि संख्या ३४३३२ । पृ० १८ ॥

त्रि··· ··· ···पक्षाभं अलिपक्षनिभं तथा ।
तदा वृष्टिः समादेश्या निश्चितं दैवचिन्तकैः ॥

**वराहमिहिरवर्णिताः पशुपक्षिकीटादीनां वृष्टिसूचिकाश्चेष्टाः—**

[1]पवनविगमः पोप्लूयन्ते झषास्थलगामिनो,
रसनमसकृन्मण्डूकानां जलागम–हेतवः ॥
मार्जारा भृशमवनिं नखैर्लिखन्तो ,
··· ··· ····

रथ्यायां शिशुरचिताश्च सेतुबन्धाः
सम्प्राप्तं जलमचिरान्निवेदयन्ति ॥
विनोपघातेन पिपीलिकानामण्डोपसङ्क्रान्तिरहिव्यवायः ।
द्रुमावरोहश्च भुजङ्गमानां वृष्टेर्निमित्तानि गवां प्लुतञ्च ॥
तरुशिखरोपगताः कृकलासा गगनतलस्थितदृष्टिनिपाताः ।
यदि च गवां रविवीक्षणमूर्ध्वं निपतति वारि तदा न चिरेण ॥
नेच्छन्ति विनिर्गमं गृहाद् धुन्वन्ति श्रवणान् खुरानपि ।
पशवः पशुवच्च कुक्कुरा यद्यम्भः पततीति निर्दिशेत् ॥
यदा स्थिता गृहपटलेषु कुक्कुरा
रुदन्ति वा यदि विततं वियन्मुखाः ।
दिवा तडिद्यदि च पिनाकिदिग्भवा,
तदा क्षमा भवति समैव वारिणा ॥
··· ··· ···

स्नायन्ते यदि जलपांसुभिर्विहङ्गाः ॥
सेवन्ते यदि च सरीसृपास्तृणाग्रा–
ण्यासन्नो भवति तदा जलस्य पातः ॥
प्रविशति यदि खद्योतो जलदसमीपेषु रजनीषु ।
केदारपूरमधिकं वर्षति देवस्तदा न चिरात् ॥

---

१. बृहत्संहिता । सद्योवर्षणाध्यायः । श्लो० ३, ४, ५, ८, ६, १०, १३, २३, २४ ॥

वर्षत्यपि रटति यदा गोमायुश्च प्रदोषवेलायाम् ।
सप्ताहं दुर्दिनमपि तदा पयो नात्र सन्देहः ॥ इत्यादि ॥

**जीवनाथवर्णिताः पशुपक्षिकीटादीनां वृष्टिसूचिकाश्चेष्टाः—**

[1]न वाति यदि मारुतो रविरुदेति चण्डद्युतिः ।
द्रुतं भुवि झषावलिर्व्रजति रन्तुमम्भस्तटान् ॥
तदेव जलमागतं पयसि भेककोलाहलो,
वदेदिह समन्ततो बुधवरः पयोदागमे ॥
लिखन्तो वसुधामुच्चैर्विडालाः स्वनखैर्यदा ।
सेतुबन्धाश्च रथ्यायां वाजिनो बालनिर्मिताः ॥
उपघातमृते पिपीलिकानां महदण्डक्रमणं यदा तदापि ।
अहिरङ्घ्रिपमस्तकप्रचारि दिवसे वाऽथ भुजङ्गमव्यवायः ॥
भुवो रजसि पक्षिणो यदि लुठन्ति तोयागमे ।
नटन्ति च शिखण्डिनो दिवि लपन्ति शब्दं पिकाः ॥
तित्तिरच्छदनिभं गगनं वा पक्षिणोऽपि मुदिताः प्रलपन्ति ।
उद्गमास्तसमये सवितुश्चेदादिगन्तमतुला जलवृष्टिः ॥ इत्यादि ॥

**लोकोक्तिषु प्रसिद्धाः पशुपक्षिकीटादीनां वृष्टिसूचिकाश्चेष्टाः —**

[2]नियर गुडासा (रीवांख्यःकीटः) नियर पानी ।
दूर गुडासा दूर पानी ॥
कलसे पानी गरम है चिड़ियां न्हावैं धूर ।
अण्डा ले चींटी चढ़ैं तो बरखा भरपूर ॥
बोलै मोर महातुरी खाटी होय जु-छाछ ।
मेह मही पर परन को जानौ काछे काछ ॥
बोली गोह फूली बन कास ।
अब नाही बरखा की आस ॥ इत्यादि ॥

---

१. वनमाला । स० भ० पु० पाण्डुलिपि संख्या ३५३६५ । अध्याय २ ॥
२. घाघ और भड्डरी ॥

## काकनिलयस्थितिं दृष्ट्वा वृष्ट्यादेः पूर्वज्ञानम्—

काकपक्षी स्वप्रसवकालात् पूर्वं ग्रीष्मर्त्तोरारम्भे स्वनिलयं निर्माति। पशुपक्षिणां चेष्टानामध्ययनं कुर्वद्भिः प्राच्यैर्जन्तुशास्त्रनिष्णातैरिदं ज्ञातं यत् काकस्य भाविवृष्टिविषयकं ज्ञानं ग्रीष्मर्त्तोः प्रागेव जायते, तदनुसृत्यैवायं पक्षी वृक्षस्य भागविशेषे स्वीयं निलयं करोति। ग्रन्थेऽस्मिन् वृष्टिगर्भविवेचन-प्रसङ्गे वर्णितं यद् आगामिनि-चातुर्मास्ये वृष्टिकाले वर्षिणां मेघानां गर्भाधानं मार्गशीर्षादिषु मासेषु जायते। अतः काकपक्षिणो ग्रीष्मारम्भे भावृष्टिज्ञानं सर्वथा सङ्गतमेव प्रतिभाति। अस्मिन् विषये प्राच्यैर्यानि पर्यवेक्षणानि कृतानि तेषां वर्णनं प्राच्यग्रन्थेषूपलभ्यते। तथा हि—

## गर्गकृतानि काकनिलयविषयकाणि पर्यवेक्षणानि—

वृष्टिज्ञानमधिकृत्य महर्षिगर्गकृतानां काकनिलयविषयकाणां पर्यवेक्षणानां वर्णनं सरस्वतीभवनपुस्तकालयस्य पाण्डुलिपिसंग्रहे सङ्गृहीते मेघमालानामकग्रन्थे विद्यते। ग्रन्थोऽयमद्यावधि अप्रकाशितः। अत्र लिपिकृतत्रुटिवशाद् बह्व्यो भाषा-सम्बन्धिन्यस्त्रुटयः सन्ति। तथा हि—

[1]वृक्षस्य पूर्वशाखायां वायसः कुरुते गृहम्।<br>
सुभिक्षं क्षेममारोग्यं सुवृष्टिः सस्यसम्पदा॥<br>
अग्निकोणस्य शाखायां वायसः कुरुते गृहम्।<br>
दुर्भिक्षं च विजानीयान्नैव वर्षति माधवः॥<br>
दक्षिणे यदि शाखायां वायसः कुरुते गृहम्।<br>
हाहाकारं महारौद्रं विग्रहं च समादिशेत्॥<br>
शाखामाश्रित्य नैर्ऋत्यां वायसः कुरुते गृहम्।<br>
द्वौ मासौ वर्षते देवो तुषारं जायते तदा॥<br>
क्रियते पश्चिमशाखायां वायसेन गृहं यदि।<br>
न च वृष्टिं विजानीयात् कथितं ते महेश्वरि॥<br>
वायव्यकोणगं काकः कुरुते गृहमुत्तमम्।<br>
पुराणं विक्रयेद् धान्यं सुभिक्षं सुखसम्पदा॥

---

१. मेघमाला। स० भ० पु० पाण्डुलिपि सं० ३७२०२। पृ० ५०-५१। अध्याय ११। श्लो० १-१०॥

उत्तरस्यां यदा काको यदि वा कुरुते गृहम् ।
वातवृष्टिं विजानीयात् कथितं काकलक्षणम् ॥
यदात्वीशानकोणे तु वायसः कुरुते गृहम् ।
स्वल्पोदकास्तदा मेघाः कृषिश्च परिशुष्यति ॥

यदि वा मध्यशाखायां वायसः कुरुते गृहम् ।
अनावृष्टिं विजानीयात् कथितं काकलक्षणम् ॥
वल्मीकभूमिमाश्रित्य वायसः कुरुते गृहम् ।
मारीचौरभयं विद्यान्नैव वर्षति माधवः ॥

**अन्यैः कृतानि काकनिलयपर्यवेक्षणानि--**

ग्रन्थान्तरेष्वपि अन्यैः कृतानि काकनिलयपर्यवेक्षणानि वर्णितानि सन्ति । अत्र क्वचित्पाठान्तरं विद्यते परं प्रायो गर्गमतेन सहैकमत्यमस्ति । केचनांशा अस्पष्टा अपि सन्ति । अत्रापि पाण्डुलिप्यामुपलब्धे पाठे लिपिकृतां त्रुटिवशाद् भाषा बहुशः संशोधनार्हा, पाठश्चापि संशोधनमर्हति । तथा हि--

[1]'शृणु चान्यद् वरारोहे काकस्य निलयं प्रिये ।
दिशश्च विदिशश्चैव याः शुभाश्चाशुभाऽथवा ॥
वृक्षस्य पूर्वशाखायां निलयं कुरुते खगः ।
सुभिक्षं क्षेममारोग्यं तस्मिन् वर्षे न संशयः ॥

वृक्षस्य वह्निशाखायां निलयं कुरुते खगः ।
अल्पोदकास्ततो मेघा दुर्भिक्षं च प्रजायते ॥
वृक्षस्य दक्षिणे भागे वायसः कुरुते गृहम् ।
द्वौ मासौ वर्षते देवस्तुषारेण ततः परम् ॥

नैर्ऋत्यां दिशि शाखायां निलयं कुरुते खगः ।
प्रथमं नैव वृष्टिः स्यात्पश्चान्मेघः प्रवर्षति ॥
वृक्षस्य पश्चिमे भागे निलयं कुरुते खगः ।
अतिवृष्टिं विजानीयात् स्थले धान्यं भविष्यति ॥

---

१. गुरुसंहिता । स० भ० पु० पाण्डुलिपि सं० ३४७२५ । पृ० ५७-५६ ॥

पूर्वमुद्धृतेषु गर्गकृतेषु पर्यवेक्षणेषु काकनिलयस्य पश्चिमभागे स्थितिरना-वृष्टिकरी वर्णिता तत्पर्यवेक्षणैः परीक्षणीयम् ।

वायव्ये तु यदा भागे वायसः कुरुते गृहम् ।
वातवृष्टिं विजनीयादतिवृष्टिश्च जायते ॥
वृक्षस्योत्तरशाखायां निलयं कुरुते खगः ।
सुभिक्षं च विजानीयाद् वायव्येन निवेदितम् ॥
ईशाने तु यदा भागे निलयं कुरुते खगः ।
मध्यमा च भवेद् वृष्टिर्बहुशस्या च मेदिनी ॥
उर्ध्वस्थाने यदा वृक्षे निलयं कुरुते खगः ।
सदा वृष्टिं विजानीयाद् गर्गस्य वचनं यथा ॥
कोटरे गृहप्राकारे निलयं कुरुते खगः ।
राजयुद्धं च दुर्भिक्षं जायते घोरदारुणम् ॥
याम्यां मण्डलमाश्रित्य भूम्यां च कुरुते गृहम् ।
छत्रभङ्गो भवत्येव राजा चैव प्रणश्यति ॥
नदीतीरे यदा भूमौ निलयं कुरुते खगः ।
शुष्कं वर्षं विजानीयाद् वायसेन निवेदितम् ॥
आमिषेण विना यत्र मिलन्ति यदि वायसाः ।
अचिरेणैव कालेन दुर्भिक्षं तत्र जायते ॥
मण्डलेऽपि च पूजायां दक्षिणे वायसो भवेत् ।
पिंगारस्य मृदुर्वाक्यं काकं ध्वस्तप्रजायते ॥

अंशोऽयमस्पष्टः ॥

तरुशाखासमारूढो धुनुते पक्षसंचयम् ।
शीघ्रं च वर्षते मेघः कथितं वायसेन तु ॥
उदकं शीतलं पीत्वा वायसः परिपच्यते ।
शीघ्रं वर्षति पर्जन्यः स्थलेन यो न वापयेत् ॥

अत्रापि श्लोकस्य पूर्वार्द्धस्यार्थोऽस्पष्टः ।

मधुरं रुदमानश्चेदूर्ध्वदृष्टिर्विहङ्गमः ।
शीघ्रं वर्षति पर्जन्यो वायसेन निवेदितम् ॥

वर्षाकाले महावृष्टिः शीतकाले च दुर्दिनम् ।
उष्णकाले महाघर्मः काकस्थानाद् विनिर्दिशेत् ।

अन्यच्चाप्यत्रैवोद्धृतम्—

तिसृषु ककुप्सु कुलायं वृष्ट्यै काकस्य निर्दिष्टम् ।
दुर्भिक्षं मरकं कुरुते याम्ये च कोणेषु ।।
काकस्य कुलाये जाते मूर्ध्नि वृक्षस्य वर्षति प्रचुरम् ।
मध्ये मध्यां वर्षति स्कन्धे जातेन जातुचिद् वृष्टिः ।।
भूमौ लग्नानोखरे कोटरे च श्वभ्रे देशे तटेषु च ।
काकालयमालोक्य नीरं निगाद्यं धीरैर्निर्वृष्टिनाशमायास्यतीति ।।

अत्र पाठोऽस्पष्टः ।।

## काकस्याण्डसंख्यातो वृष्टेः पुर्वानुमानम्—

काकस्याण्डसंख्यामाश्रित्य प्राच्यैर्वृष्टिज्ञानविषयकाणि पर्यवेक्षणानि विहितानि । ग्रामेषु कृषकाः साम्प्रतमपि मार्जारस्य प्रसूतेर्गणनामाश्रित्य भाविवृष्टिविषयेऽनुमानं कुर्वन्ति । तथैव काकाण्डसंख्यामाश्रित्यापि वृष्टिविषयकाणि पर्यवेक्षणानि संस्कृतग्रन्थेषु वर्णितान्युपलभ्यन्ते । इत्थं ज्ञायते यत्केषांचित् पशुपक्षिणां प्रसूतिसंख्या प्रकृतिनियन्त्रिता, ऋतुपरिवर्तनैः प्रभाविता च भवति । काकपक्षिणः प्रसवकालो गीष्मर्त्तौ भवति । अतो गीष्मर्तौ काकस्याण्डसंख्यां विलोक्य कृतं वृष्टिविषकमनुमानं कृषकाणामुपयोगाय भवितुमर्हति । तथा हि—

[1]एकं भवेद् वारुणमग्निसंज्ञं द्वितीयकं मारुतजं तृतीयम् ।
ऐन्द्राभिधं स्याद् द्विचतुर्थमेव पृथक् फलं वच्मि चतुष्टयस्य ।
बहूदकं वारुणनामकैकं धरा भृशं नन्दति सर्वशस्यम् ।
मन्दप्रवर्षानिलसंज्ञकाण्डे स्वल्पो भवेत्सस्यतृणादिरोहः ।।
जातानि शस्यानि समीरजेऽण्डे ऐन्द्राभिधे स्वाभिमता च वृष्टिः ।।

इत्थं विविधप्राणिनां जीवनचर्यया, शरीरविकारैः, विविधचेष्टाभिश्च सम्बद्धानि प्राच्यानां पर्यवेक्षणानि संस्कृतग्रन्थेषु वर्णितान्युपलभ्यन्ते । पर्यवेक्षणदिशमिममाश्रित्यान्यानि पर्यवेक्षणान्यपि कर्तुं शक्यन्ते ।

---

१. गुरुसंहिता । स० भ० पु० पाण्डुलिपिसंख्या ३४७२५ । पृ० ५६ ।।

## विविधरासायनिकक्रियाभ्यो वृष्टेः पूर्वानुमानम्—

जलवाय्वोस्तापक्रमविशेषस्य च प्रभावाद् वृष्टिर्भवतीति वृष्टिविवेचनप्रसङ्गे स्पष्टीकृतम्। इत्थमेव जलवाय्वोस्तापक्रमविशेषस्य च प्रभावाद् भूतले किण्वीकरणादयो विविधा रासायनिकक्रियाः प्रवर्तन्ते। वृष्टिकाले यदा वायुरार्द्रो भवति तापक्रमश्चापि किञ्चिदुच्चो भवति तदा अपेक्षितं तापक्रमं, अपेक्षितां जलमात्रां वायुश्चैकत्र प्राप्य काश्चिद् विशिष्टाः रासायनिकक्रिया जायन्ते। अतो वृष्टिकालिकवायुमण्डले जायमानानां रासायनिकक्रियाणां ज्ञानमधिगत्य समासन्ना वृष्टिर्ज्ञातुं शक्यते। विषयस्यास्य गभीरमध्ययनं विधाय प्राच्यैर्वृष्टिसूचिकानां रासायनिकक्रियाणां वर्णनं कृतम्। तद्यथा—दध्नि अम्लता, जलस्य वैरस्यं, लवणस्य विकृतिः, लोहमले गन्धविशेषस्योद्भवः, पर्वतानां श्यामवर्णता-प्रभृतयो रासायनिकक्रिया वृष्टिनैकट्यं सूचयन्ति। वस्तुतः खगमृगादीनां पूर्ववर्णितासु चेष्टासु काश्चिद् वृष्टिकालिक्यश्चेष्टा इत्थम्भूतानां विविधरासायनिकक्रियाणां परिणामभूतेभ्यो गन्धेभ्य एव समुद्भवन्ति, तद्यथा मयूराणां मत्तता नर्तनं च, कुक्कुरबिडालादीनां नखैर्भूमेरालेखनमित्यादि गन्धविशेषप्रेरितमेव प्रतिभाति।

## नारदमते वृष्टिसूचिका रासायनिकक्रियाः—

[1]'यदा जलं च विरसं'... .... .... ।
.... ....'तदा स्याद्वृष्टिरुत्तमा ॥
लोहानां मलनिचयो विस्रगन्धो यदा भवेत्।
शुद्धाञ्जनाभा गिरयो''' .... ॥
.... '''तदा बहुजलप्रदाः।

## वाराहमिहिरमते वृष्टिसूचिका रासायनिकक्रिया—

[2]'विरसमुदकं''' ... ।
लवणविकृतिः''' ... ॥
.... ... ... ।
.... .... जलागमहेतवः ॥
... ... ... ।
लोहानां मलनिचयः सविस्रगन्धः ॥

१. मयूरचित्रकम्। स० भ० पु० पाण्डुलिपि संख्या ३४३३२। पृ० १८।
२. बृहत्संहिता। सद्योवर्षणाध्यायः। श्लो० ४, ५, ६॥

गिरयोऽञ्जनचूर्णसन्निभा इत्यादि ।
सम्प्राप्तं जलमचिरान्निवेदयन्ति ।

**जीवनाथमते वृष्टिसूचिका रासायनिकक्रियाः —**

[1]दशदिशो विमला विरसं पयो
द्रवति वा लवणं किल यद्दिने । इत्यादि ॥
लोहानां मलगन्धाश्च, पर्वताः कज्जलोपमाः । इत्यादि ॥

**लोकोक्तिषु वृष्टिसूचिका रासायनिकक्रियाः —**

[2]बोलै मोर महातुरी खाटी होय जु छाछ ।
मेह मही पर परन को जानौ काछे काछ ॥ इत्यादि ॥

इत्थमेवान्या अपि अनुभवसिद्धा वृष्टिसूचिका रासायनिकक्रिया लोके प्रसिद्धाः सन्ति ।

**सूर्यचन्द्रयोः प्रकृतिवैकृताद् वृष्ट्यादेर्ज्ञानम्—**

कदाचिद् वायुमण्डले जलकणानां विद्यमानत्वात् तत्र प्रकाशकिरणानां विश्लेषणात्, कदाचिद् वा वायुमण्डले विद्यमानानां विभिन्नतापक्रमयुतानां वायुपटलानां घनत्वस्य परस्परं भिन्नत्वात् तत्र प्रकाशकिरणानामावर्तनमार्गस्य वैषम्यात्, कदाचिच्च वायुमण्डले जलवाष्पाधिक्याद् रजः कणानां प्राचुर्याद् वा सूर्यचन्द्रयोः स्वभावान्यथाभावो जायते । इत्थं सूर्यचन्द्रयोः प्रकृतिविकृतयो वायुमण्डलगतानि विविधानि परिवर्तनानि सूचयन्ति । अतः सूर्यचन्द्रयोः प्रकृतिविकृतीनां पर्यवेक्षणाद् वायुमण्डलगतानां परिवर्तनानां, तत्परिणामभूतानां वृष्ट्यनावृष्ट्यादीनां च ज्ञानं कर्तुं शक्यते । प्राच्यैर्भारतीयः ऋतुवैज्ञानिकैर्विषयेऽस्मिन् प्रभूतानि पर्यवेक्षणानि विधाय तेषां फलमपि वर्णितम् । प्राच्यग्रन्थेषूपलब्धानां विषयाणामेतेषां विवेचनमत्रोपन्यस्यते । तथा हि—

**सूर्यचन्द्रयोः प्रकृतिविकृतीनां निरीक्षणस्य प्रमुखः कालः —**

सूर्यचन्द्रयोः प्रकृतिविकृतीनां निरीक्षणं मुख्यतया वर्षर्तोः प्राग् ग्रीष्मर्त्तौ विधीयते । तथा हि—

---

१. वनमाला । स० भ० पु० पाण्डुलिपि संख्या ३५३६५ । अ० २ । पृ० २ ॥
२. घाघ और भड्डरी की कहावतें । पृ० ८४ ॥

[१]चतुर्दश्याममायां वा ज्येष्ठस्य प्रतिपद्दिने ।
आषाढे च विशेषेण शशिसूर्यनिरीक्षणम् ॥

**आषाढशुक्लनवम्यां सूर्यचन्द्रयोः पर्यवेक्षणम्—**

[२]यदा नवम्यां चाषाढे शुक्लायां निर्मलो रविः ।
तस्यामेव तिथौ रात्रौ सच्छिद्रः शशलाञ्छनः ।
दृश्यते निर्गतो वाऽपि तदा कालोऽति दुस्तरः ॥

**सूर्यस्य प्रकृतिविकृतयस्तासां फलानि च—**

मैथिलविदुषा श्री जीवनाथेन प्राच्यानां मतानि सङ्कलय्य स्वीये वनमाला-ग्रन्थे सूर्यस्य प्रकृतिविकृतीनां स्वरूपं तासां फलञ्च वर्णितम् । अत्र क्वचित्तु सूर्यस्य प्रकृतिविकृतेः वृष्ट्यादिविषयकः प्रभावः प्रत्यक्षरूपेण वर्णितः क्वचिच्च कुवृष्ट्यना-वृष्ट्यादीनां परिणामभूता रोग-मृत्यु-कलह-राजविप्लव-चौरभयप्रभृतयो विषया वर्णिताः । अप्रत्यक्षपरिणामानां वर्णनस्य प्राच्यशैल्या अस्या रहस्यं ग्रन्थस्यास्य द्वितीय-प्रकरणस्य प्रारम्भे ऋतुज्ञानविधीनां वर्णनात् प्रागेव स्पष्टीकृतम् । तथा च हानिकरीणां सूर्यप्रकृतिविकृतीनां कुपरिणामस्य निवारणाय होम-मंत्रपाठादेर्वैज्ञानिकं रहस्यं प्राच्यभारतीयस्य ऋतुविज्ञानशास्त्रस्य पौराणिक-वैज्ञानिक-पक्षयोः समन्वय-प्रसङ्गे प्रस्तुतग्रन्थस्य प्रथमप्रकरणस्यान्ते स्पष्टीकृतम् । विषयेऽस्मिन् प्राच्यानामेतन्मतं यज्जगतः काचिद् विनिश्चिता व्यवस्था कयाचिदज्ञातया शक्त्या प्रचाल्यते । अस्मिन् व्यवस्थासूत्रे निबद्धं सर्वमपि चराचरं जगत् प्रचलति । यदा तु मानवा व्यवस्थां परित्यज्य अपचरणाद् अव्यवस्थामुत्पादयन्ति तदा समग्रे निसर्गक्रमे अव्यवस्था उत्पद्यते । इयमव्यवस्था त्रिविधा भवति । तथा हि वराहमिहिरकृते बृहत्संहिताग्रन्थे उत्पाताध्याये कथितम्—

[३]अपचारेण नराणामुपसर्गः पापसञ्चयाद् भवति ।
संसूचयन्ति दिव्यान्तरिक्षभौमास्त उत्पाताः ॥ इति ॥

अत्र भट्टोत्पलेन गर्गादीनामपि सदृशानि मतान्युद्धृतानि । अस्या अव्य-वस्थाया व्यवस्थापनं द्रव्यविशेष-होम-मन्त्रादिभिर्भवतीति सर्वथा वैज्ञानिकमेव । इत्थमेव गोदोहनेपि गोदोहनोत्थो ध्वनिः, गोशरीराद् रसविशेषस्य विश्लेषश्च कश्चिददृष्टं प्रभावं जनयत इति प्राच्यैः गोदोहक्रिया प्रयतप्रभावकरी वर्णिता ।

१. गुरुसंहिता । स० भ० पु० पाण्डुलिपिसंख्या ३४७२५ । पृ० २६ । श्लो० २०१ ॥
२. अत्रैव । पृ० ३०-३१ । श्लो० ४३ ॥
३. बृहत्संहिता । उत्पाताध्यायः । श्लो० २ ॥

**सूर्यप्रकृतिविकृतीनां फलम्—**

[1]मुक्ता-रजत-चन्द्राभो राजते सविता दिवि ।
अयनद्वितये शस्यं प्रवदेदधिकं जलम् ॥
वृष्टिं निहन्ति रूक्षाभो जलाभस्तनुते जलम् ।
पावकाभो महादाहं ताम्राभः शस्त्रजं भयम् ॥

अरुण-पङ्कज-विद्रुम-काञ्चनच्छविरुदेति दिवा लपने रविः ।
भुवि मखं च सुखं किल देहिनामिह जलं विमलं तनुतेतराम् ॥
दिनमुखे यदि नीलमणिद्युती रविरिला विकला विजला सती ।
अतिरुजा सुजना विजना भुवि प्रतिदिशं विलपन्ति च हा ! रवम् ॥

मधुकरकपिलाभो व्यालशार्दूलचौरान् अधिकबलिन इत्थं विद्रुमाभो जलं च ।
जनयतिरुधिराभो रक्तधारामजस्रं नरपतिसरजालैराहवे भूपतीनाम् ॥

धूमनिभः सविता विकृताभो हन्ति जलञ्च बलं नृपतीनाम् ।
कुन्दनिभोऽपि पुरोहितमद्धा चम्पकपुष्पनिभो नृपपुत्रान् ॥

द्विधा त्रिधा यदा छिन्नं मण्डलं सवितुर्यदा ।
राज्ञो मरणमादिश्ये दण्डो वा दृश्यते दिशेत् ॥
शशरक्तनिभो भास्वानुदये यदि दृश्यते ।
तदा परस्परं युद्धं विज्ञेयं नरपालयोः ॥
यदि वा कांस्यपात्राभश्चन्द्रविम्ब इवामलः ।
विकरो नभसो मध्ये महाभयकरो रविः ॥
दिवाकरो यदोदये मयूरचन्द्रिकानिभः ।
कबन्धचक्रमण्डिता मही महीधरैरिव ॥
नवाम्बुदनिभा रेखा रविमण्डलमध्यगा ।
दृश्यते दैवयोगेन निधनाय भयाय च ॥
अस्तकाले यदाऽऽदित्यः सच्छिद्रः पाण्डुरस्तथा ।
देशो विनाशमायाति राजा च तदनन्तरम् ॥

---

१. वनमाला । स० भ० पु० पाण्डुलिपिसंख्या ३५३६५ । पृ० ३ । तृतीयोऽध्यायः ॥

तद्दोष-परिहारार्थं जलस्यागमनाय च ।
तिलधान्ययवैरेव दूर्वाभिः श्रीफलैः सह ॥
हवनं सूर्यमंत्रेण कर्तव्यं विधिपूर्वकम् ।
लक्षसंख्यं तदन्ते तु ब्राह्मणानपि भोजयेत् ॥
गोदोहान्मंत्रपाठाच्च होमाद् ब्राह्मणपूजनात् ।
सर्वतः क्षेममारोग्यं नराणां भवति ध्रुवम् ॥

**चन्द्रस्य प्रकृतिविकृतयस्तासां फलानि च—**

यथा सूर्यस्य सपरिवेषत्वादिस्वभावान्यथाभावं दृष्ट्वा वृष्ट्यादीनां ज्ञानं भवति तथैव चन्द्रस्यापि प्रकृतिविकृतयो वृष्ट्यादीनां पूर्वसूचनासाधनीभूता भवन्ति। पूर्वमुद्धृते वनमालाग्रन्थे श्रीजीवनाथेन प्राच्यानां मतान्याश्रित्य चन्द्रस्य प्रकृति-विकृतीनां स्वरूपं, तासां शुभाशुभफलं च वर्णितम् । अत्रापि अशुभप्रभावाणां शान्त्यै होमोपचारादिविधिर्निर्दिष्टः । विधीनामेतेषां वैज्ञानिकं महत्त्वं पूर्वं स्पष्टीकृतम् । तथा हि—

[1]कुन्दक्षीरनिभस्ताराधीश्वरो दिवि दृश्यते ।
प्रसन्नः शुभ्रकान्तिश्च वितनोति स मङ्गलम् ॥
पूर्णिमायां यदा चन्द्रः प्रभाहीनो नभोमुखे ।
खण्डितो वा विवर्णो वा सर्वलोकान्तकृद् भवेत् ॥

अरुणपद्मकृशानुशिखानिभो विधुरतो विमृगो हि महाभयम् ।
भवति चेदभितोऽत्र महीभृतो यदि विलोचनगोचरतां गतः ॥
मुक्ता-कम्बु-दधि-प्रभो दिवि शशिः सायं सदा मङ्गलम् ।
चंचत्काञ्चनचम्पकच्छविरपि द्रव्यव्रजं देहिनाम् ॥
आरोग्यं तनुते बलं भुवि जलं मञ्जिष्ठरागारुणः ।
तापं भस्म-हुताश-ताम्र-रुधिरप्रख्यः समन्ताद् भयम् ॥
कपिलकान्तिरिलापतिमन्दिरेऽनलभयं कुरुते मरणं नृणाम् ।
भवति नीलवपुः पशुपीडनं भुवि तदा नहि वर्षति वारिदः ॥

---

१. वनमाला । स० भ० पु० पाण्डुलिपि संख्या ३५३६५ । चतुर्थोऽध्यायः पृ० ४-५ ॥

कीरपक्षसदृशः शशी यदा शस्यराशिरभितो विनश्यति ।
पीतकान्तिरिभमण्डली तथा श्यामलो द्रुहिणपादजातकः ॥
लोहितो नृपतिरस्त्रघाततो याति मृत्युमचिरेण सर्वथा ।
रुक्षधूमसदृशो महाभयं रोगराशिरभितो न मङ्गलम् ॥
वामे वा दक्षिणे पार्श्वे चन्द्रस्य प्रतिचन्द्रिका ।
त्रिरात्रं महती वृष्टिः पक्षैकेन भयं भवेत् ॥
नीलाभ्रैरावृतश्चन्द्रः पक्षादावुदयेऽन्यतः ।
महाभयं महायुद्धं न दोषो जलदागमे ॥
नात्युन्नतं नाति ह्रस्वं यदि शृङ्गद्वयं विधोः ।
अभिरामं द्वितीयायां दृश्यते क्षेमकृद् भवेत् ॥
दक्षिणे यदि नीचत्वं सौम्ये शृङ्गं यदोन्नतम् ।
व्रजतीति तदाऽऽरोग्यं सुभिक्षं जायते भुवि ॥
अन्यथा मरणं पुंसामनावृष्टिः प्रजायते ।
सर्वतो दुष्टभीतिश्च युद्धं नृपतिमण्डले ॥
यदा लाक्षारक्तानलकमलबन्धूकसदृशो ।
महीपानां युद्धं तुमुलमनिशं वीरनिकरैः ॥
समन्तादातङ्को भवति धनुरन्तर्दिवि तदा ।
गवामन्तो भूमौ विधुरुदयमुच्चैरुपगतः ॥
यदाऽऽकाशे शृङ्गद्वयममृतरश्मेर्विधिवशाद् ।
अधोवक्रं व्यक्तं दिनकरकराणामपगमे ॥
खरांशोः सन्तापानलशतशिखाभिर्विकलिताः ।
नरा हाहाकारं दिशि दिशि लपन्ति क्षितितले ॥
पक्षादौ शशिनो रेखा चायता दक्षिणोत्तरा ।
आकाशे दृश्यते दैवादनावृष्टिः प्रजायते ॥
ज्वरशीतकफव्रातैराकुला मनुजा भुवि ।
युद्धं क्षितिभृतो घोरं प्रजानां भयकारकम् ॥

द्विधा चन्द्रो यदाकाशे दृश्यते दैवयोगतः ।
ब्राह्मणानां शुभं ज्ञेयं त्रिधा प्रलयकारकः ॥
गोदानाद् भूमिदानाच्च तथा विप्रस्य पूजनात् ।
शान्तिपाठाद् विशेषेण चोत्पातो नश्यति ध्रुवम् ॥
कर्णतालीदले लक्षं सानुस्वारं विलिख्य तत् ।
सम्पूज्य विधिना तोये प्रक्षिपेद् वृष्टिहेतवे ॥

**वृष्टिज्ञानाय यान्त्रिकविधयः —**

प्राच्यभारते वृष्टिज्ञानाय केचन यान्त्रिकविधयोऽपि प्रचलिता अभूवन्। विधिष्वेषु कालविशेषे वायुर्मण्डलस्य तापक्रममार्द्रतां वाऽधीत्य भाविनो वत्सरस्य आगामिनो वृष्टिकालस्य वा वृष्ट्यादेर्ज्ञानमक्रियत । अत्र प्रयुक्तेषु पर्यवेक्षणेषु नितान्तं सरलानां सर्वसुगमानाञ्च यन्त्राणामुपयोगो भवति स्म । अत्रोदाहरणरूपेण केषाञ्चिद् विधीनां विवरणमुपन्यस्यते । तथा हि—

**वृष्टिज्ञानाय पराशरोक्तो नदीजलतलाङ्कनविधिः —**

अस्य विधेः प्रयोगस्तत्रैव कर्तुं शक्यते यत्र काचिदित्थम्भूता नदी समासन्ना स्याद् यस्यां वैशाखमासेऽपि प्रवहमानं जलं भवेत्। अस्मिन् विधौ कस्यचिद् दण्डस्य द्विशतसंख्यकैस्तुल्यैर्विभागैरङ्कनं क्रियते। स च दण्डोऽङ्कतुल्ये जले प्रवाहयुक्तनद्यां निशि न्यस्यते । प्रातरुत्थाय तस्मिन् दण्डे नदीजलतलस्य पर्यवेक्षणं क्रियते । चेज्जलतलं दण्डस्थापनकालवद् भवति तर्हि वृष्टिर्गतवत्सरवदेव भवति। जलतलस्याधिक्ये अधिका, न्यूनत्वे च न्यूना वृष्टिर्भवति। जलतले अङ्कस्यैकस्याधिक्यं भवति चेतर्हि आगामिवत्सरे पूर्ववत्सराद् द्विगुणा वृष्टिर्भवति तथैव सस्यसम्पत्तिरपि द्विगुणिता सम्पद्यते। विधिरयं महर्षेः पराशरस्य कृषिपद्धतिग्रन्थे वर्णित उपलभ्यते। तथा हि —

प्रवाहयुतनद्यां तु दण्डं न्यस्य जले निशि ।
वैशाखशुक्लप्रतिपत्तिथौ वृष्टिं निरूपयेत् ॥
ओं सिद्धिरितिमन्त्रेण मन्त्रयित्वा शतद्वयम् ।
अङ्कयित्वा तु तद्दण्डमङ्कतुल्ये जले क्षिपेत् ॥
प्रातरुत्थाय सहसा तदङ्कं तु निरूपयेत् ।
समं चैवाधिकं न्यूनं भविष्यज्जलकाङ्क्षया ॥[1]

---

१. कृषिपराशरः । पृ० १२। श्लो० ४८–५२ ।

गतवत्सरवद् वारि वन्या चैव समे भवेत् ।
हीने हीनं भवेद् वारि भवेद् वन्या च तादृशी ॥
अङ्काधिक्ये तु द्विगुणा वृष्टिर्वन्या च जायते ।
इति पाराशरेणोक्तं भविष्यद्वृष्टिलक्षणम् ॥

विधिरयं भौतिकशास्त्रीयं रहस्यम् अन्तर्निधाय वर्तते। अनेन विधिना तस्मिन् काले क्षेत्रविशेषस्य रात्रिदिवसयोर्तापमानस्यान्तरं वायुमण्डलस्यार्द्रत्वं च विज्ञातं भवति। एतद् हि सुस्पष्टं यज्जलस्यायतनं तापक्रमेण सहैव न्यूनत्वमाधिक्यं वोपयाति। इत्थं कालद्वये जलतलं दृष्ट्वा तदानीन्तनस्य तापक्रमस्यान्तरं ज्ञातं भवति। इत्थं वैशाखशुक्लप्रतिपत्तिथौ रात्रिदिवसयोस्तापमानस्यान्तराधिक्यमागामिनि वृष्टिकाले समीचीनां वृष्टिं सूचयतीति विधेरस्य भौतिकशास्त्रीयं रहस्यम्।

## वृष्टिज्ञानाय गर्गोक्तः कुम्भप्रयोगविधिः –

महर्षिणा गर्गेण आषाढे रोहिणीयोगावसरे भाविचातुर्मास्यवृष्टेर्ज्ञानाय निर्देक्ष्यमाणेन विधिना कुम्भप्रयोग उपदिष्टः। वैज्ञानिकदृष्ट्या विधिरयं रोहिणीयोगावसरे वायुगतेः, वायोरार्द्रतायाश्च मापनमधिकृत्य वर्तते। अस्मिन् विधौ विविधदिक्स्थानां घटानां जलस्य न्यूनाधिकमात्रायां शोषणाद् दिग्विशेषगतस्य मारुतस्य आर्द्रताया न्यूनाधिक्यं ज्ञातं भवति। यद्दिग्भवे मारुते आर्द्रताया आधिक्यं भवति तद्दिक्स्थस्य कुम्भस्य जलं न्यूनमात्रायां शुष्यति। यद्दिग्भवे च मारुते आर्द्रताया न्यूनत्वं भवति तद्दिक्स्थस्य कुम्भस्य जलमधिकमात्रायां शोषमेति। वृष्टिकाले वायोरार्द्रत्वाधिक्यमधिकां वृष्टिं करोतीति सुस्पष्टम्। अतो यद्दिग्भवेन मारुतेन यस्य मासस्य वृष्टिः प्रभाविता भवति तद्दिग्भवस्य मारुतस्य आर्द्रताया स्थितिस्तस्य मासस्य वृष्टेः स्थितिं सूचयति। इत्थं कालविशेषे दिग्विशेषभवस्य मारुतस्य आर्द्रतामधीत्य यन्महर्षिणा स्वपर्यवेक्षणानां फलं वर्णितं तत्सर्वथा वैज्ञानिकमेव।

उक्तं गर्गमतमाश्रित्य वराहमिहिरेण स्वीये बृहत्संहिताग्रन्थे विधिरयं वर्णितः। तथा हि—

[1]नामांकितैस्तैरुदगादिकुम्भैः प्रदक्षिणं श्रावणमासपूर्वैः ।
पूर्णैः स मासः सलिलस्य दाता स्रुतैरवृष्टिः परिकल्प्यमूनैः ॥

वराहमिहिरोक्तेराधारभूतं गर्गवचनं भट्टोत्पलेन स्वटीकायामुद्धृतम्। ततश्च विषयोऽयमधिकं स्पष्टतामेति। तथा हि—

---

१. बृहत्संहिता। रोहिणीयोगाध्यायः। श्लो० २६॥

[1]सौम्ये तु श्रावणं विन्द्यात्पूर्वे भाद्रपदं वदेत् ।
दक्षिणेऽश्वयुजो ज्ञेयः पश्चिमे कार्तिकं विदुः ॥
सर्वे कुम्भाः सुपूर्णाः स्युरभग्नाः कान्तिसंयुताः ।
चतुरो वार्षिकान् मासान् सर्वान् वर्षति वासवः ॥
सर्वस्रुतैरवृष्टिः स्याद्द्वैर्मध्यमवर्षणम् ।
द्रवैस्तथात्रिधा वृष्टिर्वक्तव्या जलमानतः ॥ इति ॥

**वृष्टिज्ञानाय वराहमिहिरोक्तस्तुलाप्रयोगविधिः —**

वराहमिहिरेण भाविवृष्टेर्ज्ञानार्थम् आषाढमासस्य पौर्णमास्यां वक्ष्यमाणेन विधिना तुलाप्रयोगविधिर्वर्णितः। अत्र समानपरिमाणेन गृहीतस्य कूपजलस्य, नदीजलस्य तडागजलस्य च तुलया भारः परीक्ष्यते। इत्थं त्रिविधानामपि जलानां घनत्वं परीक्षितं भवति। कूप-जलस्य घनत्वाधिक्ये आगामिवत्सरे हीना वृष्टि-र्जायते। नदीजलस्य घनत्वाधिक्ये मध्यमा वृष्टिः, तडागजलस्य घनत्वाधिक्ये च उत्तमा वृष्टिर्भवति। सामान्यतः कूप-नदी-तडागजलानां घनत्वं क्रमशोऽधिकं भवति। अतस्त्रिविधस्यापि जलस्य घनत्वस्य नैसर्गिकत्वे समीचीना वृष्टिः, घनत्वक्रमे च व्यतिक्रमो वृष्टिविघातको भवतीति वराहमिहिरोक्तस्य प्रयोगस्य निष्कर्षः। अत्रोक्तो घनत्वव्यतिक्रमो वायुमण्डलीयार्द्रतायाः वायुमण्डलगतस्य भूगर्भगतस्य वा ताप-क्रमस्य व्यतिक्रमं न्यूनत्वं वा द्योतयति। तथा हि—

[2]याम्ये शिक्ये काञ्चनं सन्निवेश्यं शेषद्रव्याण्युत्तरेऽम्बूनि चैव ।
तोयैः कौप्यैः सैन्धवैः सारसैश्च वृष्टिर्हीना मध्यमा चोत्तमा च ॥

प्रसङ्गेऽस्मिन् आचार्येण बृहत्संहितायां आषाढीयोगाध्याये तुलनाविधानस्य प्रयोगविधेश्च विस्तृतं विवेचनमुपन्यस्तम्, तदत्र ग्रन्थविस्तरभिया नोपन्यस्यते। इत्थम्भूता अन्येऽपि प्रयोगाः प्राच्यग्रन्थेषु वर्णिताः सन्ति।

**ग्रहाणामुदयास्त-गति-स्थिति-सङ्क्रान्ति-योगादिभ्यो वृष्ट्या-दीनाम् ऋतुपरिवर्तनानां ज्ञानम्—**

सौरमण्डले विद्यमानाः सर्वेऽपि ग्रहा दूरस्थिता अपि सुसम्बद्धाः स्वस्वप्रभावैः परस्परं प्रभावयन्ति। यथा ग्रहाणामुदयास्त–गति–स्थिति–सङ्क्रान्ति–योगादीनां निश्चितः क्रमो वर्तते तथैवावस्थानविशेषवर्तिनां तेषां परस्परं प्रभावा अपि

१. अत्रैव भट्टोत्पलटीकायामुद्धृतं गर्गवचनम् ॥
२. बृहत्संहिता। आषाढीयोगाध्यायः श्लो० ७ ॥

सुनिश्चिताः सन्ति । ग्रहाणामिमे प्रभावा विविधविधा भवन्ति परं प्रसङ्गेऽस्मिन् तेषां वृष्ट्यादिविषयकाणां प्रभावाणां विवरणं प्रस्तूयते । प्राच्यैर्महर्षिभिराचार्यैश्च विषयस्यास्य गभीरमध्ययनमकारि । ग्रहाणामुदयास्त-गति-स्थिति-सङ्क्रान्ति-योगादीनां वृष्ट्यादिगतप्रभावविषये महर्षिणा पराशरेणोक्तम्—

[1]ग्रहणामुदये चास्ते तथा वक्रातिचारयोः ।
प्रायो वर्षन्ति हि घना नृपाणामुद्यमेषु च ॥

प्रथमं तावदवस्थानविशेषे ग्रहाणामुदयास्तयोः वृष्ट्यादिविषयकः प्रभावो वर्णयिष्यते । तथा हि—

## ग्रहाणामुदयास्ताभ्यां भाविवृष्ट्यादेः पूर्वानुमानम्—

अवस्थानविशेषे जातस्य चन्द्रोदयस्य, शुक्रोदयस्य, शुक्रास्तस्य, शनेरस्तङ्गमनस्य बुधोदयस्य, बुधास्तस्य, गुरोरुदयस्य च वृष्ट्यादिविषये विशिष्टः प्रभावो भवति ।

अत्र तावदुक्तग्रहाणामुदयास्तयोः वृष्ट्यादिविषयकप्रभावस्य कानिचिद् उदाहरणानि प्रस्तूयन्ते । विषयोऽयमप्रकाशितग्रन्थानां पाण्डुलिपिषु बहुशो वर्णितो दृश्यते परमत्र लिपिकृतां त्रुटिवशाद् भाषादिसम्बन्धिन्यो बह्वयस्त्रुटयः सन्ति । तथा हि—

## चन्द्रोदयकालिकराशेर्वृष्ट्यादेर्ज्ञानम्—

खमण्डलस्य द्वादशविभागा राशयः कथ्यन्ते । इत्थं राशिविशेषकथनात् खमण्डले स्थानविशेषः कथितो भवति । राशिविशेषे समुदितस्य चन्द्रस्य वृष्ट्यादिविषयकः प्रभावः प्राच्यैः पर्यवेक्षणैः सम्यगधीतः । अत्रापि वृष्ट्यादिविषयकप्रभाववर्णने क्वचित् प्रत्यक्षा क्वचिदप्रत्यक्षा च वर्णनशैली प्राच्यैरनुसृता । वृष्टिज्ञानविधीनां वर्णनात् प्रागेव प्राच्यानां वर्णनशैल्याः स्फुटं विवेचनं सप्रमाणं कृतम् । तद्यथा धान्यविशेषस्य महर्घता धान्यविशेषस्य निष्पत्त्यर्थमपेक्षिताया वृष्टेरभावं सूचयति । तथा हि—

[2]यदा मेषोदितश्चन्द्रस्तुषधान्यमहर्घता ।
वृषे च तिलमाषादि दुर्लभं जायते प्रिये ॥
मिथुनस्योदयं चन्द्रे जायते सर्वशोभनम् ।
अनावृष्टिश्च कर्के स्यात्क्षयं सिंहे चतुष्पदे ॥

---

१. कृषिपराशरः । पृ० १६ । श्लो० ७२ ॥

२. मेघमाला । स० भ० पु० पाण्डुलिपि ३७२०२ । पृ० २६-३० ।

कन्यायामुदिते चन्द्रे पीडा स्याद् गोद्विजस्य च ।
तुलायां तुषभाण्डादि महर्घं जायते ध्रुवम् ॥
वृश्चिके सर्वसस्यानां निष्पत्तिर्बहु जायते ॥
धने सुभिक्षं देवेशि सर्वसस्यानि जायते ॥

अत्र मिथुनस्योदये चन्द्रे इत्यस्य स्थाने "मिथुने तूदिते चन्द्रे" इति पाठः समीचीनतरः । अत्र भाण्डानां महर्घता यातायातावरोधिकामनृतुवृष्टिं सूचयति !

## मासविशेषे शुक्रोदयाद् वृष्ट्यादेर्ज्ञानम्—

अत्रापि वर्णनशैली बहुशोऽप्रत्यक्षा । अत्रमासविशेषे समुदितस्य शुक्रस्य वृष्ट्यादिगतः प्रभावो वर्णितः । तथा हि—

[1]आश्विने सर्वसम्पतिः शुभं कार्तिकमार्गयोः ।
पौषे चैव तथा माघे छत्रभङ्गः प्रजायते ॥
अर्घवृष्टिः फाल्गुने स्यात् चैत्रे च तरुसम्पदा ।
वैशाखे विग्रहो राज्ञां ज्येष्ठे वृष्टिश्च जायते ॥
आषाढे तूदिते शुक्रे जलं भवति दुर्लभम् ।
श्रावणे तु पशोः पीडा भाद्रे धान्यसमृद्धयः ॥

## शुक्रास्तकालिकराशेर्वृष्ट्यादेर्ज्ञानम्—

राशिविशेषे शुक्रस्यास्तङ्गमनं वृष्ट्यादिषु स्वीयं विशिष्टं प्रभावं प्रदर्शयति । अस्यापि वर्णनं मेघामालाग्रन्थे उक्तस्थले प्राच्यामप्रत्यक्षशैलीमधिकृत्य कृतं वर्तते । तथा हि—

[2]मेषराशौ यदा देवि शुक्रस्यास्तं प्रजायते ।
रसं धान्यं क्षयं याति चतुरङ्घ्रिवृषेषु च ॥
मिथुने वर्षते देवि कर्कटे जनपीडनम् ।
सिंहे च जायते वाऽस्तं भृगुपुत्रो यदा प्रिये ॥
चतुष्पदं तथा धान्यं नश्यते सस्यपीडनम् ।
कन्यायां च वणिक्पीडा तुलायां राजपीडनम् ॥

---

१. मेघमालाग्रन्थे । उक्त स्थले ॥

२. अत्रैव ।

दुर्भिक्षं वृश्चिके वाच्यं दुर्भिक्षं धनुषे भवेत् ।
मकरे च गते वाऽस्ते धान्यानां तु क्षयस्तदा ॥
कुम्भे वाऽस्तं यदा याति भृगुपुत्रः सुरेश्वरि ।
तदा पीडा ब्राह्मणस्य मयाऽऽख्यातं शृणुष्व तत् ॥
मीनराशौ भृगुसुतो यदा वाऽस्तमुपागतः ।
सुभिक्षं क्षेममारोग्यं वृष्टिर्भवति भूयसी ॥

**शनेरस्तकालिकराशेर्वृष्ट्यादेर्ज्ञानम् —**

पूर्ववदेव शनेरपि राशिविशेषेऽस्तङ्गमनं वृष्ट्यादौ प्रभावविशेषं जनयति। मेघमालाग्रन्थे प्रभावस्यास्य वर्णनं प्राच्यैः कृतम्। अत्रापि वर्णनं प्रायः प्राच्यया अप्रत्यक्षशैल्या कृतं वर्तते। तथा हि —

[1]यदा मेषगतो देवि शनिरस्तं प्रयाति हि ।
तदा च सर्वधान्यानां निष्पत्तिर्जायते ध्रुवम् ॥
वृषे वाऽस्तङ्गते सौरौ चतुष्पादं विनश्यति ।
मिथुने मन्दगे वाऽस्ते तदा सद्वर्षणं भवेत् ॥
तथा वणिग्जने पीडा कर्के धान्यमहर्घता ।
तथा चतुष्पदे पीडा सिंहेऽप्येतत्फलं भवेत् ॥
कन्यायां धान्यदुर्भिक्षं प्रजापीडा प्रजायते ।
तुलायां सस्यबाहुल्यं जनानां सौख्यदं भवेत् ॥
वृश्चिके धान्यनाशश्च जलं स्वल्पं प्रजायते ।
धनुषे मन्दगे वाऽस्ते अन्नं भवति दुर्लभम् ॥
मकरे च पशोः पीडा रसधान्यमहर्घता ।
स्त्रीणां नराणां देवेशि पीडा भवति निश्चयम् ॥
घटस्थे मन्दगे वाऽस्ते चतुष्पादं विनश्यति ।
मीने तु जायते वाऽस्तं शनेः सुभिक्षकृद् भवेत् ॥
माधवो वर्षते देवि पूर्णसस्या च मेदिनी ।
फलन्ति सर्ववृक्षाणि महोत्सवः प्रवर्तते ॥

---

१. उक्तस्थले ।

## बुधोदय-बुधास्ताभ्यां वृष्ट्यादेर्ज्ञानम् —

बुधोदय-बुधास्ताभ्यां भाद्रमासीयवृष्टेः शुभाशुभत्वं सूच्यते । तथा हि —

[१]आषाढमासे यदि शुक्लपक्षे सोमस्य पुत्रो ह्युदयं करोति ।
अस्तं च शुक्रे यदि याति याति भाद्रे सुवर्षं च समानतुल्यम् ॥

## वृहस्पतेरुदयाद् वृष्ट्यादेर्ज्ञानम् —

अवस्थानविशेषे समुदितस्य गुरोर्वृष्ट्यादिषु ऋतुपरिवर्तनेषु विशिष्टः प्रभावो भवति । विषयस्यास्य प्राच्यैर्गभीरमध्ययनं विहितम् । नक्षत्रविशेषे, राशिविशेषे वा समुदितस्य गुरोर्वृष्ट्यादौ प्रभावमध्येतुं प्राच्यः कृतानां पर्यवेक्षणानां फलानि प्राच्य-ग्रन्थेषु वर्णितान्युपलभ्यन्ते । तथा हि —

## नक्षत्रविशेषे समुदिताद् गुरोर्वृष्ट्यादेर्ज्ञानम् —

प्राच्यपाण्डुलिपिषु विषयेऽस्मिन् कृतानां पर्यवेक्षणानां फलं प्राच्यवर्णनपद्धत्या वर्णितमुपलभ्यते । अत्र भाषा संशोधनार्हा । तथा हि —

[२]नक्षत्रेण सहोदयमस्तं वा याति येन देवपतिमन्त्री ।
तत्संज्ञं वक्तव्यं वर्षं मासक्रमेणैव ।
वर्षाणि कार्तिकादीन्याग्नेयाद्भद्वयानुयोगीनि ।
क्रमशस्त्रिभं तु पंचममुपान्त्यमन्त्यं च यद् वर्षं ॥

सस्यानि घृतकार्पासतैलादिसुखराशयः ।
चैत्रवर्षे भवेद् वृष्टिर्नृपसौख्यफलप्रदा ॥
अर्घं विविधभावेन जायते द्रविणप्रदम् ।
नीरुजा निर्भया लोका वैशाखे जनपूजिताः ॥

तस्करैः पापरोगैर्वा पीड्यन्ते पीडया जनाः ।
भ्राम्यन्ति स्वेच्छया भूम्यां निर्द्रव्या ज्येष्ठसंज्ञके ॥
अर्घं महर्घतां याति शान्तं वैरभयं भवेत् ।
आषाढे स्वल्पवृष्टिश्च तुषधान्यमहर्घता ॥

---

१. अत्रैव ।

२. संवत्सरफलम् । स०भ०पु० पाण्डुलिपि-संख्या १४२६८। पृ० १३-१४ ॥

मनोह्लादं प्रकुर्वन्ति जनाः सौख्यसमायुताः ।
श्रावणे वृष्टिरत्युग्रा गोमहिष्यादि ··· पयः ॥
अर्घं महर्घतां याति धनधान्यसमं भवेत् ।
माधवो वर्षति स्वल्पं सम्पदो भाद्रवर्षके ॥
सुभिक्षं पूर्वसस्यं स्याज्ज्वररोगाकुलं जगत् ।
आश्विने शोभना वृष्टिर्नृपसौख्यकरी सदा ॥
पापबुद्धिरता लोका भवन्ति कार्तिके सदा ।
देवता नैव मन्यन्ते राज्यं च तस्करैर्हृतम् ॥
कार्पासादि महर्घं स्यात् गोधूमशालितैलकम् ।
मेघो वर्षति देवोऽपि मार्गशीर्षे विशेषतः ॥
ज्वररोगक्षुधार्ताश्च नाना जनपदाः सदा ।
महर्घं तु त्रयो मासाः पौषे स्वस्थं ततः परम् ॥
सुभिक्षं पूर्वमाशायां मध्यमं पश्चिमे तथा ।
उत्तरे रौरवं माघे वर्षे धान्यमहर्घता ॥
सुभिक्षं प्रचुरा वृष्टिरुत्तरे याम्यपश्चिमे ।
पूर्वस्यां रौरवं घोरं फाल्गुने वत्सरे शुभम् ॥

## राशिविशेषे समुदिताद् गुरोर्वृष्ट्यादेर्ज्ञानम् —

राशिविशेषे समुदितस्य गुरोर्वृष्ट्यादौ प्रभावविषये प्राच्यैः कृतानां पर्यवेक्षणानां फलानि प्राच्य-पद्धत्या वर्णितानि संवत्सरफलग्रन्थे समुपलभ्यन्ते। तथा हि —

'यदा देवगुरुर्मेषे सुभिक्षारोग्यसम्पदः ।
राजानो युद्धनिरतास्तदामेघ-परिक्षयः ॥
जीवे वृषे सुभिक्षं स्याद् गोरसस्य महर्घता ।
स्त्रियो बालाश्च पशवो विनश्यन्ति न संशयः ॥
यदा मिथुनगो जीवस्तदा दुर्भिक्षतो भयम् ।
नृपाणां विग्रहस्तत्र सस्यनाशोऽवर्षणम् ॥

१. प्रागुक्तपाण्डुलिप्याम् । पृ० १४ ॥

कर्कस्थिते देवपूज्ये सुभिक्षारोग्यसम्पदः ।
भवत्यत्र न सन्देहो वासवश्च प्रवर्षति ॥
सिंहराशिगते जीवे सर्वशस्यमहर्घता ।
भवत्यत्र न सन्देहः पृथ्वी धान्यसमन्विता ॥
कन्याराशिगते जीवे जलं वर्षन्ति वारिदाः ।
प्रजास्तत्र निरातङ्काः सुभिक्षारोग्यसम्पदः ॥
तुलाराशिगते जीवे प्रजा व्याधिप्रपीडिताः ।
अर्घं समर्घतां याति क्वचित्तस्य महर्घता ॥
यदा वृश्चिकराशौ च देवपूज्यः समाश्रितः ।
अन्नं दुर्लभतां याति मेघा बहुजलप्रदाः ॥
कार्मुके च गते जीवे गोधूमादिमहर्घता ।
वर्षाकाले च सस्यानि महर्घाणि तिला गुडाः ॥
मकरस्थे देवगुरौ महावृष्टिश्च जायते ।
विग्रहं यान्ति राजानस्त्रिभिर्मासैः सुभिक्षकम् ॥
कुम्भे यदा गुरुर्याति प्राच्यां दुर्भिक्ष-पीडनम् ।
यदा सुरगुरुर्मीने प्राच्यामन्नसमर्घता ॥ इत्यादि ॥

## ग्रहाणामवस्थानविशेषाद् ग्रहसञ्चाराद्वा वृष्ट्यादेर्ज्ञानम्—

यथा ग्रहाणामुदयास्तयोस्तथैव तेषामवस्थानविशेषस्य सञ्चारक्रमविशेषस्य वा वृष्ट्यादिषु प्रभावो भवति । अस्मिन् विषये प्राच्यैः प्रभूतानि पर्यवेक्षणानि विधाय ग्रहाणां स्थितिसञ्चारयो वृष्ट्यादिविषयकः प्रभावो प्राच्यग्रन्थेषु वर्णितः । प्रसङ्गेऽस्मिन् कानिचिदुदाहरणानि तावदुपस्थाप्यन्ते । तद्यथा—

## पराशरमते वृष्टिकारकाणि ग्रहावस्थानानि ग्रहसञ्चरणानि च—

महर्षिणा पराशरेण वृष्टिकारकाणां ग्रहावस्थानानां गहसञ्चाराणाञ्च वर्णनं स्वीये कृषिपद्धतिग्रन्थे । कृतम् । तथा हि—

'चलत्यङ्गारके वृष्टिर्ध्रुवा वृष्टिः शनैश्चरे ।
वारिपूर्णां महीं कृत्वा पश्चात् सञ्चरते गुरुः ॥

---

१. कृषिपराशरः । श्लोक० ७१-७४ ॥ पृ० १९-२० ॥

ग्रहाणामुदये चास्ते तथा वक्रातिचारयोः ।
प्रायो वर्षन्ति हि घना नृपाणामुद्यमेषु च ॥
चित्रामध्यगते जीवे भिन्नभाण्डमिव स्रवेत् ।
ततः स्वातिं समासाद्य महामेघान् विमुञ्चति ॥
पुष्येणोपचितान् मेघान् स्वातिरेका व्यपोहति ।
श्रवणे जनितं वर्षं रेवत्येका विमुञ्चति ॥

**पराशरमते वृष्टिविघातकानि ग्रहसञ्चरणानि—**

[1]ध्रुवे च वैष्णवे हस्ते मूले शक्रे चरन् कुजः ।
सद्यः करोत्यनावृष्टिं कृत्तिकासु मघासु च ॥
कुजपृष्ठगतो भानुः समुद्रमपि शोषयेत् ।
स एव विपरीतस्तु पर्वतानपि प्लावयेत् ॥
सद्यो विकृन्तयेद् वृष्टिं चित्रामध्यगतो भृगुः ।
अङ्गारको यदा सिंहे तदाङ्गारमयी मही ॥
स एव रविणा युक्तः समुद्रमपि शोषयेत् ॥

अस्यैव ग्रन्थस्यैका प्रतिलिपिः कृषिपद्धतीतिनाम्ना वंगाक्षरेषु लिखिता लन्दन-नगरस्थे 'इण्डिया-आफिस-मैन्युस्क्रिप्ट-लाइब्रेरी' इतिनाम्नि पुस्तकालये वर्तते । प्रसङ्गेऽस्मिन्नुक्ते कृषिपद्धतिग्रन्थे अधिकः पाठः समुपलभ्यते । अंशोऽयं बहुशः खण्डितः, पाठश्च संशोधनार्हः । तथा हि—

[2]यदि व्रजति कुजः पतङ्गमार्गं घट इव भिन्नतलो जलं ददाति ।
अथ वहति दिनकराग्रतो वा भवति तदाऽसौ प्रलयायसमर्थः ॥
यद्येकराशौ भवतः सितेन्दुजौ पयोऽतिपूर्णां कुरुतो वसुन्धराम् ॥
तयोस्तुमध्ये यदि पद्मबान्धवस्तदा महीशोषमुपैति नान्यथा ।
सिंहे गते क्षितिसुते शुभवर्जिते च शोषं वायुः प्रलय इवाम्बुवाहाः ।
भिन्नेन्दुनीलसकलोपमवामेध्यमाना वर्षन्ति ते कृपणदानमिवाम्बुवृष्टिम् ॥

---

१. अत्रैव । पृ० २१ ॥
२. कृषिपराशरः । पृ० ७ श्लो० २७-२८ ॥

अत्र भिन्नेद्रनीलेति भिन्नेन्दुनीलेति वेति सन्दिग्धम्। इत्थमेव सकलोपमवामेद्यमानेति पाठोऽपि अस्पष्टः।

तामापतन्तीं कुरुराजसेनां समुद्रवेलामिव दुर्निवाराम्।
निवारयत्येकरथेन पार्थश्चित्रां गतः सूर्य इवाम्बुवृष्टिम्॥

अत्र पार्थश्चित्रामिति पार्थश्चितामिति वेति पाठे सन्देहः।

[1]अत्युन्नतं जलदवृन्दमुपैतिनाशमङ्गारको यदि वृहस्पतिनैकराशिम्।
शोषं प्रयान्ति सरितो हृदनिर्झरास्ते पक्षत्रयं भवति तत्र तुषारवृष्टिः॥
सलिलरहितशक्रो याति शोषं धरित्री भवति सततवातो धूलिरूर्ध्वं नभोऽपि।

अत्रै शक्रो याति इति वारद्वयं लिखितम्। लिपिकृतस्त्रुटिरियमिति प्रतीयते।

भवति समरभीतिर्याति नाशं नरेन्द्रो युवतिमिथुनमीने कार्मुके मन्दगे च॥

एकराशिगताः पापाः शनिभौमदिवाकराः।
पृथ्वी धूमाकुला तत्र रुदन्ति बहवो जनाः॥

अस्यांशस्य संशोधनं मेघमालादिग्रन्थेषूपलब्धस्य पाठस्य साहाय्येन, यथावसरं पर्यवेक्षणैश्च कर्तुं शक्यते।

## पराशरमते ग्रहसञ्चाराद् वार्षिकवृष्टिमानस्याकलनम्—

सूर्यस्य गत्यवस्थानयोः पर्यवेक्षणाद् भाविवत्सरीयवृष्टे परिमाणस्याप्याकलनं कर्तुं शक्यते। अस्मिन् विषये महर्षेः पराशरस्य मतमवलोकनीयम्। तथा हि—

[2]युग्माजगोमत्स्यगते शशाङ्के रविर्यदा कर्कटकं प्रयाति।
जलं शताढं, हरिकार्मुकेऽर्धं वदन्ति कन्यामृगयोरशीतिम्॥
कुलीरकुम्भालितुलाभिधाने जलाढकं षण्णवतिं वदन्ति।
अनेन मानेन तु वत्सरस्य निरूप्य नीरं कृषिकर्म कार्यम्॥

अयं विषयः किञ्चित्पाठान्तरेण संवत्सरफलग्रन्थेऽपि वर्णितो लभ्यते। अत्र द्वितीयश्लोकस्य प्रथमपङ्क्तौ 'कुलीरकुम्भालितुलागतेन्दौ व्रजेद्रविः षण्णवतिस्तदानीम्' इति पाठो विद्यते।[3]

---

१. कृषि-पद्धतिः। इण्डिया आफिस मेन्युस्क्रिप्ट-लाइब्रेरी लन्दन। कैटलग सं० ३१६८। पाण्डुलिपि-संख्या १२७४ ए।

२. कृषिपराशरः। पृ० ७ श्लो० २८॥

३. संवत्सरफलम्। स० भ० पु० पाण्डुलिपिसंख्या ३४३६८। पृ० १०॥

## वर्षणे जलाढकविभागः —

उक्ताया वृष्टेः कियानंशः कुत्र वर्षतीत्यस्यापि विवरणं कृषिपराशरग्रन्थे निर्दिष्टं विद्यते। तथा हि—

[1]समुद्रे दशभागांश्च षड्भागानपि पर्वते।
पृथिव्यां चतुरो भागान् सदा वर्षति वासवः॥

## जलाढकमानम्—

उक्ते वृष्टिमानवर्णने जलाढकाख्यं वृष्टिपरिमाणं प्रयुक्तम्। जलाढकं तावत्किमाकारकं भवतीत्यपि प्रसङ्गेऽस्मिन् कथितम्। तथा हि—

शतयोजनविस्तीर्णं त्रिंशद्योजनमुच्छ्रितम्।
आढकस्य भवेन्मानं मुनिभिः परिकीर्तितम्॥

स्मृतितत्वग्रन्थे [2]"त्रिंशद्योजनविस्तीर्णं शतयोजनमायतमिति" जलाढकमानं वर्णितमुपलभ्यते। संवत्सरफलग्रन्थे तु जलाढकं [3]"चतुर्योजनविस्तीर्णमुत्तानशतयोजनमिति" कथितम्।

## मेघमालोक्तं ग्रहावस्थानसञ्चरणाभ्यां वृष्ट्यादिज्ञानम्—

मेघमालाग्रन्थेऽपि ग्रहगतिमाश्रित्य जलयोगो वर्णितः। अत्रापि भाषा बहुशो व्याकरणनियमानुपेक्ष्य वर्तते। तथा हि—

[4]वर्षाकाले गते भानौ रौद्रर्क्षे यदि पार्वति।
जलयोगं तदा चिन्त्यं वृष्ट्यर्थे च प्रयत्नतः॥
एकनाडीसमायुक्तौ चन्द्रमाधरणीसुतौ।
यदा तत्र भवेज्जीवस्तदा एकार्णवा मही॥
बुधशुक्रसमीपस्थे करोत्येकार्णवां महीम्।
तयोरन्तर्गते भानौ समुद्रमपि शोषयेत्॥
हस्तत्रयं मघा-मूलं-पूर्वात्रयं च रेवती।
भरणी चोत्तरा तिस्रो रोहिणी-जलयोगभम्॥

---

१. कृषिपराशरः। पृ० ७। श्लो० २६॥
२. स्मृतितत्वे। पृ० ७०१॥
३. संवत्सरफलम्। उक्तपाण्डुलिप्याम्। पृ० १०॥
४. मेघमाला (स० भ० पु० पाण्डुलिपि सं० २७२०२)। पृ० ४५ श्लो० ५६-६८॥

मकरस्थश्च माहेयो वृषस्थश्च दिवाकरः ।
ज्येष्ठामूलगतः शुक्रः समुद्रमपि शोषयेत् ॥
आश्लेषायां गतो भानुः प्लावयेत्पर्वतानपि ।
यदि चित्रां भृगोः प्राप्तिः समुद्रमपि शोषयेत् ॥
तामापतन्तीं कुरुराजसेनां समुद्रवेलामिव दुर्निवार्याम् ।
निवारयत्येकरथेन पार्थश्चित्रां गते शुक्र इवाम्बुवृष्टिम् ॥
यदा भौमश्च चन्द्रश्च देवतानां पुरोहितः ।
एकराशिगता देवि तदा मेघो जलप्रदः ॥
चलत्यङ्गारर्के वृष्टिरुदिते च बृहस्पतौ ।
शुक्रस्यास्तमये वृष्टिस्त्रिधा वृष्टिः शनैश्चरे ॥
व्रजति यदि कुजः पतङ्गमार्गे घटमिव भिन्नतलं जलं ददाति ।
अथ भवति दिवाकराग्रगश्चेत् प्रलयघनानपि शोषयेत्यवश्यम् ॥

**जीवनाथमते भाविवृष्टिसूचकानि ग्रहसञ्चरणानि—**

मैथिलविदुषा जीवनाथेन प्राच्यानां मतान्याश्रित्य स्वीये वनमालाग्रन्थे भाविवृष्टिसूचकानां ग्रहसञ्चरणानां ग्रहावस्थानानां च वर्णनं कृतम् । तथा हि—

[1]'नवमपञ्चमभावमुपागते, हिमकरे मकरेऽपि समन्ततः ।
ददति मन्दभतो भुवि जीवनं सरवका नवका हि बलाहकाः ॥
जलभगो जलगो जलदा नभे जलमयं जगदिन्दुरगं गतः ।
वितनुते गुरुणा बलपूरितः कविभतः परितः प्रविलोकितः ॥
बुधकवी दिनकृत्करवर्जितौ भवत एकभगावभितो जलम् ।
अविरलं भुवि मुञ्चति वारिदः क्षितिसुतोऽपि तदन्तरगो न चेत् ॥
दिनकरो यदि मङ्गलतः पुरो वितनुते भुवनं भुवि सर्वतः ।
क्षितिसुतो महदम्बुसमागमं हरति तं सवितुः पुरतो व्रजन् ॥
जलचरर्क्षमुपेत्यसमागतो यदि तनुं सुतनुः क्षणदापतिः ।
भवति वा किल कण्टकगोवली प्रचुरमम्बुचयं सृजति क्षणात् ॥

१. वनमाला । वा० सं० वि वि० सरस्वतीभवनपुस्तकालये पाण्डुलिपिसंख्या ३५३६५ । पृ० १ । श्लो० ४–११ ॥

दलविरामतमी लपने वनं व्रजति वा सविता भवनान्तरम् ।
अलिकुलाभवलाहकमण्डली परिसृजत्यवनीं मनसो मुदे ।।
क्षितिसुते चलति क्षणदाधवे जलचरं गतवत्यपि चारतः ।
अविरलं नवनीरधरागमे भुवि जलं परिमुञ्चति नीरदः ।।
चलति देवगुरौ च विधोः सुते रविसुवो दिवि सञ्चरतस्त्रिधा ।
सृजति दैत्यगुरोरुदयास्तयोरविरलं परितो जलमम्बुदः ।।

## लोकोक्तिषु ग्रहसञ्चाराद् वृष्टिज्ञानम्—

भारते क्षेत्रीयभाषाणां लोकोक्तिष्वपि एवंविधा प्रचुरा सामग्री दृश्यते। उदाहरणार्थं हिन्दी भाषाया एका लोकोक्तिर्द्रष्टव्या । तथा हि—

आगे मङ्गल पीछे भान । वर्षा होवै ओस समान*।। इत्यादि ।।

## ग्रहनक्षत्रयोगेभ्यो वृष्ट्यादेर्ज्ञानम् —

ग्रहाणामवस्थानविशेषस्य वृष्ट्यादि-सम्बन्धिनः प्रभावाः पूर्वं वर्णिताः। सम्प्रति ग्रहनक्षत्रादीनां योगविशेषाणां वृष्ट्यादिगताः प्रभावा वर्णयिष्यन्ते। यथा राशि-विशेषस्थितानां नक्षत्रविशेषस्थितानां वा ग्रहणां वृष्ट्यादिषु विशिष्टः प्रभावो भवति तथैव ग्रहाणामन्यैर्ग्रहनक्षत्रादिभिः सह सम्पर्कोऽपि वृष्ट्यादिषु ऋतु-परिवर्तनेषु स्वं प्रभावमातनोति । अस्य विषयस्य प्राच्यैर्गभीरमध्ययनं विहितम् । पर्यवेक्षणेभ्योऽधि-गताः स्वीया अनुभवाश्च प्राच्यग्रन्थेषु वर्णिताः । अत्र तावदुदाहरणरूपेण प्राच्यानां विचाराः प्रस्तूयन्ते । तथा हि —

## नारदमते वृष्ट्यादिसूचका योगाः —

[1]विश्वभे च गतो मन्दः सप्तमर्क्षे यदा रविः ।
नदीजलविनाशः स्यात् प्रजानां क्रन्दनं महत् ।।
वासवर्क्षे यदा सौरिः भूमिपुत्रेण सङ्गतः ।
न वर्षन्ति जलं मेघाः सस्यहानिश्च जायते ।।
एकराशौ गता ह्येते सौम्यशुक्रदिनाधिपाः ।
सर्वधान्यसमर्घत्वं मेघाः स्वल्पजलप्रदाः ।।

---

*. घाघ और भड्डरी की कहवतें ।।

१. नारदीये मयूरचित्रके । सरस्वतीभवन पुस्तकालये पाण्डुलिपि संख्या ३४३३२ । पृ० ३ । श्लो० ८, ९ । पृ० ४ श्लो० २१, २७, ३१ । पृ० ५ श्लो० ४३-४६ ।।

सूर्येज्यकविमन्दाश्च राहुरेकत्र संस्थिताः ।
मेघा जलं प्रमुञ्चन्ति सर्वधान्यसमर्घता ॥
रवीन्दुशुक्रेज्यशशाङ्कपुत्रा यदैकराशौ सहिता भवन्ति ।
मेघाः प्रवर्षन्ति महर्घता स्यात् प्रजाविनाशो दिशि नैर्ऋतायाम् ॥
एकराशिगतावेतौ धरापुत्राङ्गिरः-सुतौ ।
तदा मेघा न वर्षन्ति वर्षाकाले न संशयः ॥
वृषे भानुः कुजः सौरिस्तदा युद्धं समादिशेत् ।
न वर्षन्ति जलं मेघा दुर्भिक्षं लोकपीडनम् ॥
चन्द्रभार्गवधरासुता यदा मीनराशिमुपयान्ति वै तदा ।
दुर्लभं भवति सर्वधान्यकं वारिदश्च न जलं प्रमुञ्चति ॥

अत्रैवान्यदपि —

[1]प्रावृट्काले शीतरश्मिः शनिश्च शुक्रादस्ते सौम्यदृष्टाच्च मन्दात् ॥
वृद्धिस्थाने सप्तमे त्रित्रिकोणे वृष्टिर्वाच्या दैवविद्भिः पुरस्तात् ।

शुभाश्च जलराशिस्थाः केन्द्रचित्ततृतीयगाः ।
जलप्रदा सिते पक्षे विधौ चोदयगे जले ॥
सप्तमगौ रविचन्द्रौ सितरविजौ रसातले लग्नात् ।
प्रावृट्काले जलदौ भ च तो वा द्वितीयसहजस्थौ ॥
प्रश्नलग्ना तोयराशिर्यदि वित्ततृतीयगः ।
तोयसंज्ञो ग्रहस्तत्र भवत्यत्र जलप्रदः ॥
समागमे ज्ञसितयोस्तथा च गुरुशुक्रयोः ।
तद्वच्च जीवबुधयोर्वृष्टिः स्यान्नात्र संशयः ॥
यदा भवन्ति सूर्यस्य गृहा पृष्ठाश्च लम्बिताः ।
पुरतो वा यदा यान्ति तदाऽप्येकार्णवा धरा ॥
बुधभृग्वोर्मध्यगतः सूर्यः स्याज्जलशोषकः ।
तयोर्यदि समीपस्थस्तदा बहुजलप्रदः ॥

---

१. अत्रैव पृ० १८, १६ ॥

अग्रे याति यदा भौमः पश्चाच्चलति भास्करः ।
तत्र वृष्टिर्न विपुला जायते नात्र संशयः ॥

**नारदमते रोहिणीयोगाद् भाविवार्षिकवृष्टेः पूर्वानुमानम् —**

रोहिणीयोगकाले चन्द्रस्य स्थितिमनुसृत्य नारदेन स्वीये मयूरचित्रकग्रन्थे वृष्ट्यादिसम्बन्धिनः प्रभावा वर्णिताः। तथा हि —

[१]दक्षिणेन यदा याति रोहिण्या रजनीकरः ।
दूरस्थो निकटस्थो वा जगतः कष्टदायकः ॥
उत्तरस्यां स्पृशन् याति रोहिणीं रोहिणीपतिः ।
सोपसर्गा तदावृष्टिरस्पृशन् सुखिनो जनाः ॥
रोहिणीशकटमध्यगः शशी शोकरोगभयदुःखदः स्मृतः ।
शीतरश्मिमनुयाति रोहिणी कामिनो हि वशगास्तदाङ्गनाः ॥
धरणीसुतमन्दरहितः कान्तियुतश्चन्द्रमाविनोपघातः ।
शुभदश्च स जगतो यदि सूर्यस्तीक्ष्णरश्मिः स्यात् ॥
रोहिण्याः पृष्ठतो याति यदा कुमुदिनीपतिः ।
कामिनीनां वशं यान्ति नराः कामप्रपीडिताः ॥
वह्नेर्दिशि भयमतुलं नैर्ऋत्यां दुःखसंयुता लोकाः ।
ईशानस्थेचन्द्रे सुखबाहुल्यं मध्यमं वायव्ये ॥

**नारदमते स्वातियोगाद् वृष्ट्यादेः पूर्वानुमानम् —**

रोहिणीयोगवदेव स्वातियोगोऽपि आषाढ-श्रावण-फाल्गुन-चैत्र-वैशाख-मासेषु भाविवृष्ट्यादीनां विषये विशेषेणाध्येतव्यो वर्तते। स्वातियोगस्य वृष्ट्यादि-विषयकः प्रभावस्तावन्नारदेन वर्णितः। तथा हि —

[२]यथोक्तं रोहिणीयोगे फलं स्वातौ विचिन्तयेत् ।
आषाढे यद् विशेषोऽत्राहं वच्म्यतः परम् ॥

---

१. मयूरचित्रकम्। स० स० पु० पाण्डुलिपिसंख्या ३४३३२। पृ० ११। श्लो० ६७-७३ ॥

२. भट्टोत्पलेन बृहत्संहितायां रोहिणीयोगाध्याये १२, २०, २१-संख्यकश्लोकेषु स्वटीकायामुद्धृता गर्गोक्तिः ॥

सप्तम्यां माघमासे यदि पतति हिमं स्वातिनक्षत्रयोगे ।
चन्द्रार्कौ रश्मिहीनौ जलधरसहितौ वाति वातः प्रचण्डः ॥
विद्युद्युक्तं नभो वा यदि भवति तदा सर्वसस्यैरुपेता ।
पृथ्वी स्याद् वारिपूर्णा मुदितजनपदा सर्वलोकैश्च युक्ता ॥
श्रावणे फाल्गुने मासे चैत्रवैशाखयोरपि ।
आषाढे स्वातियोगोऽयं विचार्यो दैवचिन्तकैः ॥

**मेघमालाकारमते वृष्टिसूचका योगाः —**

[1]उदयास्तमये मार्गे वक्रयुक्ते च सङ्क्रमे ।
जलराशिगताः खेटा महावृष्टिप्रदाः सदा ॥
द्वीशात्रयं नपुंसकाख्यं मूलात्पुंसश्चतुर्दश ।
आर्द्रादौ दश ऋक्षाणि देवि योषित्प्रकीर्तिताः ॥
पुंसा योषिन्महावृष्टिः षण्ढे योषा भवेत्क्वचित् ।
द्वे द्वे स्त्री शीतलं ज्ञेयमुभयोः पुरुषे न च ॥
आषाढे चैव वृष्टिः स्यात्तदा किंचित्कृतो बुधैः ।
भविष्यति वरो योगः श्रावणे सप्तमीदिने ॥

**गर्गमते रोहिणीयोगकालिकवृष्टिलक्षणानि —**

[2]योगे ह्यनुद्धता वाता ह्लादयन्तः सुखप्रदाः ।
प्रदक्षिणाः श्रेष्ठतमाः पूर्वपूर्वोत्तरा इति ॥
दधिरौप्यामलक्रौञ्चताम्राभारुणसन्निभाः ।
शुककौशेयमाञ्जिष्ठास्तपनीयसमप्रभाः ॥
अच्छिन्नमूलाः सुस्निग्धाः पर्वताकारसन्निभाः ।
घना घनाः प्रशस्यन्ते विद्युत्स्तनितसङ्कुलाः ॥
छिन्नमूलाश्च वृक्षाश्च शुष्का वाष्पाकुलीकृताः ।
पापसत्वानुकाराश्च मेघाः पापफलप्रदाः ॥

---

१. मेघमाला । स० भ० पु० पाण्डुलिपिसंख्या ३७२०२ । पृ० ४५ श्लो० ६९-७२ ॥

२. भट्टोत्पलेन बृहत्संहिताया रोहिणीयोगाध्याये १२, २०, २१-संख्यकश्लोकेषु स्वटीकायामुद्धृता गर्गोक्तिः ॥

समाससंहितावर्णितानि रोहिणीयोगकालिकलक्षणानि —

[1]आषाढबहुलपक्षे शिशिरकरे रोहिणीसमायुक्ते ।
यदि गगनममलमत्यन्ततीक्ष्णरश्मिः सहस्रांशुः ॥
सलिलगुरुनम्रजलधरतडिल्लतालोलरञ्जितदिगन्तः ।
अमितमभेकचातककादम्बविमिश्रमाकाशम् ॥
क्षितितनयरविजरहितः स्फटिकनिभश्चन्द्रमा निरुत्पातः ।
मरुतश्च पूर्वपूर्वोत्तरोत्तराः शान्तमृगविहगाः ॥ इति ॥

वराहमिहिरमते रोहिणीयोगकालिकलक्षणानि —

[2]शान्तपक्षिमृगराविता दिशो निर्मलं वियदनिन्दितोऽनिलः ।
शस्यते शशिनि रोहिणीगते मेघमारुतफलानि वच्म्यतः ॥
क्वचिदसितासितैः सितैः क्वचिच्च क्वचिदसितैर्भुजगैरिवाम्बुवाहैः ।
वलितजठरपृष्ठमात्रदृश्यैः स्फुरिततडिद्रसनैर्वृतं विशालैः ॥
विकसितकमलोदरावदातैररुणकरद्युतिरञ्जितोपकण्ठैः ।
छुरितमिव वियद्घनैर्विचित्रैर्मधुकरकुंकुमकिंशुकावदातैः ॥
असितघननिरुद्धमेव वा चलिततडित्सुरचापचित्रितम् ।
द्विपमहिषकुलाकुलीकृतं वनमिव दावपरीतमम्बरम् ॥
अथवाञ्जनशैलशिलानिचयप्रतिरूपधरैः स्थगितं गगनम् ।
हिममौक्तिकशंखशशाङ्ककरद्युतिहारिभिरम्बुधरैरथवा ॥
तडिद्धेमकक्ष्यैर्बलाकाग्रदन्तैः स्रवद्वारिदानैश्चलत्प्रान्तहस्तैः ।
विचित्रेन्द्रचापध्वजोच्छ्रायशोभैस्तमालालिनीलैर्वृतं चाब्दनागैः ॥
सन्ध्यानुरक्ते नभसि स्थितानामिन्दीवरश्यामरुचां घनानाम् ।
वृन्दानि पीताम्बरवेष्टितस्य कान्तिं हरेश्चोरयतां यदा वा ॥
सशिखिचातकदर्दुरनिःस्वनैर्यदि विमिश्रितमन्द्रपटुस्वनाः ।
समवतत्य दिगन्तविलम्बिनः सलिलदाः सलिलौघमुचः क्षितौ ॥

---

१. भट्टोत्पलेन उक्तस्थले २० तमश्लोकटीकायामुद्धृतं समाससंहितावचनम् ।
२. बृहत्संहितायां चतुर्विंशतितमे रोहिणीयोगाध्याये । श्लो० १२-२५ ॥

निगदितरूपैर्जलधरजालैस्त्र्यहमवरुद्धं द्व्यहमथवाऽहः ।
यदि वियदेवं भवति सुभिक्षं मुदितजना च प्रचुरजला भूः ॥
रूक्षैरल्पैर्मारुताक्षिप्तदेहैरुष्ट्रध्वाङ्क्षप्रेतशाखामृगाभैः ।
अन्येषां वा निन्दितानां स्वरूपैर्मूकैश्चाब्दैर्नो शिवं नापि वृष्टिः ॥
विगतघने वा वियति विवस्वानमृदुमयूखः सलिलकृदेवम् ।
सर इव फुल्लं निशि कुमुदाढ्यं खमुडुविशुद्धं यदि च सुवृष्ट्यै ॥
पूर्वोद्भूतैः सस्यनिष्पत्तिरब्दैराग्नेयाशासम्भवैरग्निकोपः ।
याम्ये शस्यं क्षीयते नैर्ऋतेऽर्द्धं पश्चाज्जातैः शोभना वृष्टिरब्दैः ॥
वायव्योत्थैर्वातवृष्टिः क्वचिच्च पुष्टा वृष्टिः सौम्यकाष्ठासमुत्थैः ।
श्रेष्ठं सस्यं स्थाणुदिक्सम्प्रवृद्धैर्वायुश्चैवं दिक्षु धत्ते फलानि ॥
उल्कानिपातास्तडितोऽशनिश्च दिग्दाहनिर्घातमहीप्रकम्पाः ।
नादा मृगाणां सपतत्रिणाञ्च ग्राह्या यथैवाम्बुधरास्तथैव ॥

वराहमिहिरमते रोहिणीयोगे चन्द्रस्थितिमधीत्य वृष्ट्यादिज्ञानम्—

'दूरगो निकटगोऽथवा शशी दक्षिणे पथि यथा यथा स्थितः ।
रोहिणीं यदि भुनक्ति सर्वथा कष्टमेव जगतो विनिर्दिशेत् ॥
स्पृशन्नुदग्याति यदा शशाङ्कस्तदा सुवृष्टिर्बहुलोपसर्गा ।
असंस्पृशन् योगमुदक्समेतः करोति वृष्टिं विपुलां शिवं च ॥
रोहिणीशकटमध्यसंस्थिते चन्द्रमस्यशरणीकृता जनाः ।
क्वापि यान्ति शिशुयाचिताशनाः सूर्यतप्तपिठराम्बुपायिनः ॥
आग्नेय्यां दिशि चन्द्रमा यदि भवेत्तत्रोपसर्गो महान् ।
नैर्ऋत्यां समुपद्रुतानि निधनं सस्यानि यान्तीतिभिः ॥
प्राजेशानिलदिक्स्थिते हिमकरे सस्यस्य मध्यश्चयो ।
याते स्थाणुदिशं गुणाः सुबहवः सस्यार्घवृष्ट्यादयः ॥
दृश्यते न यदि रोहिणीयुतश्चन्द्रमा नभसि तोयदावृते ।
रुग्भयं महदुपस्थितं तदा भूश्च भूरिजलसस्यसंयुता ॥

---

१. वृहत्संहिता । रोहिणीयोगाध्यायः । श्लो० २८, २९, ३०, ३३, ३४ ॥

ताडयेद्यदि च योगतारकामावृणोति वपुषा यदाऽपि वा ।
ताडने भयमुशन्ति दारुणं छादने नृपवधोऽङ्गनाकृतः ॥

अत्र योगतारा दीप्तिमत्तरा तारेति । तथा हि—

[1]सताराग़णमध्ये तु या तारा दीप्तिमत्तरा ।
योगतारेति सा प्रोक्ता नक्षत्राणां पुरातनैः ॥ इति ॥

**समाससंहितावर्णितं रोहिणीयोगे चन्द्रस्थितिफलम्—**

उदगपि च तुहिनकिरणः पूर्वोत्तरतोऽथवा स्थितः प्राच्याम् ।
यदि भवति तदा वसुधा भवति विवृद्धा प्रहृष्टजना ॥
उपसर्गोऽनलदिक्स्थे याम्याशासंस्थिते शकटके च ।
किं कष्टैस्तैरुक्तैः श्रुतमात्रैर्यैः कृशो भवति ॥
क्रिमिशुकशलभादिभयं नैर्ऋत्यां नातिपुष्टिरपरेण ।
वायव्याशासंस्थे मध्यं सस्यं कुमुदनाथे ॥ इति ॥

**वराहमिहिरमते स्वातियोगे वृष्ट्यादिलक्षणानि—**

[2]यद्रोहिणीयोगफलं तदेव स्वातावषाढासहिते च चन्द्रे ।
आषाढशुक्ले निखिलं विचिन्त्यं योऽस्मिन् विशेषस्तमहं प्रवक्ष्ये ॥
स्वातौ निशांशे प्रथमेऽभिवृष्टे सस्यानि सर्वाण्युपयान्ति वृद्धिम् ।
भागे द्वितीये तिलमुद्गमाषा ग्रैष्मं तृतीयेऽस्ति न शारदानि ॥
वृष्टेऽह्निभागे प्रथमे सुवृष्टिस्तद्वद् द्वितीये तु सकीटसर्पा ।
वृष्टिस्तु मध्यापरभागवृष्टे निश्छिद्रवृष्टिर्द्युनिशं प्रवृष्टे ॥
सममुत्तरेण तारा चित्रायाः कीर्त्यते ह्यपां वत्सः ।
तस्यासन्ने चन्द्रे स्वातेर्योगः शिवो भवति ॥
सप्तम्यां स्वातियोगे यदि पतति हिमं माघमासान्धकारे ।
वायुर्वा चण्डवेगः सजलजलधरो वापि गर्जत्यजस्रम् ॥

---

१. उक्तस्थले । ३३ तमश्लोकटीकायां भट्टोत्पलेनोद्धृतं समाससंहितावचनम् ॥
२. बृहत्संहिता स्वातियोगाध्यायः । श्लो० १-६ ॥

विद्युन्मालाकुलं वा यदि भवति नभो नष्टचन्द्रार्कतारम् ।
विज्ञेया प्रावृडेषा मुदितजनपदा सर्वसस्यैरुपेता ॥
तथैव फाल्गुने चैत्रे वैशाखस्यासितेऽपि वा ।
स्वातियोगं विजानीयादाषाढे च विशेषतः ॥

श्रीभट्टोत्पलमतेऽन्त्यः श्लोकः प्रक्षिप्त इति ।

**गर्गमते स्वातियोगे वृष्ट्यादिलक्षणानि—**

[1]स्वातियोगे यदा युक्ते पूर्वरात्रे प्रवर्षति ।
ग्रीष्मशारदसम्पन्नां तां समामभिनिर्दिशेत् ॥
रात्रेर्द्विभागमाश्रित्य स्वातियोगेऽभिवर्षति ।
सम्पदो मुद्गमाषाणां तिलानां चावधारयेत् ॥
त्रिभागशेषे शर्वर्याः स्वातियोगेऽभिवर्षति ।
ग्रैष्मं सम्पद्यते सस्यं शारदं तु विनश्यति ।
अह्नस्तृतीयभागे तु मध्यमां कुरुते समाम् ।
अहोरात्रं यदा वर्षेत्स्वातियोगे पुरन्दरः ॥
तदा तु चतुरो मासान् सर्वान् वर्षति वासवः ॥ इति ॥

**पराशरमते आषाढीयोगे वृष्ट्यादिपर्यवेक्षणानि—**

[2]स्वातावषाढास्वथ रोहिणीषु पापग्रहा योगगता न शस्ताः ।
ग्राह्यं तु योगद्वयमप्युपोष्य यदाऽधिमासो द्विगुणीकरोति ॥
त्रयोऽपि योगाः सदृशाः फलेन यदा तदा वाच्यमसंशयेन ।
विपर्यये यत्त्विह रोहिणीजं फलं तदेवाभ्यधिकं निगाद्यम् ॥
निष्पत्तिरग्निकोपो वृष्टिमन्दाऽथ मध्यमा श्रेष्ठा ।
बहुजलपवना पुष्टा शुभा च पूर्वादिभिः पवनैः ॥
वृत्तायामाषाढ्यां कृष्णचतुर्थ्यामजैकपादर्क्षे ।
यदि वर्षति पर्जन्यः प्रावृट् शस्ता न चेन्न ततः ॥

---

१. उक्तस्थले तृतीयश्लोकटीकायां भट्टोत्पलेनोद्धृतं गर्गवचनम् ॥
२. बृहत्संहिता । आषाढीयोगाध्याये । श्लो० ११–१५ ।

आषाढ्यां पौर्णमास्यां तु यद्यैशानोऽनिलो भवेत् ।
अस्तं गच्छति तीक्ष्णांशौ सस्यसम्पत्तिरुत्तमा ॥

**गर्गमते आषाढीयोगे वृष्ट्यादिलक्षणानि—**

[1]योगैः पापैरुपहतैः प्रजानामशुभं वदेत् ।
दुर्भिक्षावृष्टिमरकान् सौम्यैः सौभिक्षमादिशेत् ॥

**जीवनाथमते वृष्ट्यादिसूचका ग्रहयोगाः —**

द्रुहिण–नारद–गर्ग पराशरादीनां मतमाश्रित्य जीवनाथेन वृष्ट्यादिसूचकाः ग्रहयोगा नक्षत्रयोगाश्च स्वीये वनमालाग्रन्थे वर्णिताः । तथा हि —

[2]भानुना संयुतो मंगलो यत्र भे सिंहगो वा धरानन्दनः केवलः ।
नीलपद्माभपानीयधाराधरो दूरतो याति नायाति भूमण्डले ॥
मधुकरनिभपक्षे दर्शभूताष्टमीषु व्रजति कविरथास्तं वोद्गमं यत्र यत्र ।
अमरपतिनिदेशादिन्द्रनीलाभधाराधर उतपरितोऽम्बुव्रातमुच्चैर्ददाति ॥
बुधदेवज्ययोर्योगे जलवर्षणमादिशेत् ।
तत्रादित्यो न वा भौमो जलदागमने भृशम् ॥
ज्ञजीवयोरम्बुकविज्ययोर्वा सितज्ञयोरेव समागमेऽपि ।
पतन्त्यलं भूमितले विशेषाद् यमारयोरग्निरितस्ततश्च ॥

प्रसङ्गेऽस्मिन् मैथिलीलिपिपाण्डुलिप्यां तु अधिकः पाठो दृश्यते—

पुरतः पुरतः खेटा रवेरालम्बिता यदा ।
तदैव महती धारा वारिणः पतति क्षितौ ॥

**जीवनाथमते वृष्ट्यादिसूचका नक्षत्रयोगाः —**

[3]गिरिशभादबला दशतारका द्विपतिभादुदिता हि नपुंसकाः ।
इह नरास्तु चतुर्दश मूलतो द्रुहिणनारदगर्गपराशरैः ॥

---

१. अत्रैव । एकादशश्लोकटीकायां भट्टोत्पलेनोद्धृतं गर्गवचनम् ॥

२. वनमाला । स० भ० पु० पाण्डुलिपिसंख्या ३५३६५ । पृ० २, श्लो० २२-२४ तथा पृ० ३ श्लो० १४ ॥

३. वनमाला । स० भ० पु० पाण्डुलिपिसंख्या ३५२६५ । पृ० २ । श्लो० २०-२६ ॥

यदि भवेद्बलानरयोर्युतिर्जलततिर्महती परितः क्षितौ ।
अबलया युतिरत्र नपुंसके जलधरावरणं परतो दिवि ॥

**लोकोक्तिषु वृष्ट्यादिसूचका योगाः —**

[1]कर्क के मङ्गल होंय भवानी,
देव धूर बरसैंगे पानी ॥
आगे मङ्गल पीछें भान ।
बरखा होवै ओस समान ॥
गुरुवासर घन् (चन्द्रग्रहण) बरखा करई ॥ इत्यादि ।

**सङ्क्रान्ति कालिकलक्षणेभ्यो वृष्टयादेर्ज्ञानम्—**

खमण्डले ग्रहाणामवस्थानविशेषस्य परिवर्तनमेव सङ्क्रान्तिरिति कथ्यते । ग्रहाणां; तत्रापि विशेषतः सूर्यस्य; सङ्क्रमणकालस्य ऋतुपरिवर्तनदृष्ट्या यन्महत्त्वं विद्यते तत्प्रत्यक्षमेव । अस्य सङ्क्रमणकालस्य प्राच्यैर्गभीरमध्ययनं कृतम्, स्वपर्यवेक्षणानां फलभूता अनुभवाश्च प्राच्यग्रन्थेषु वर्णिताः । अत्र भाषा बहुशः संशोधनार्हा । तथा हि —

**सूर्यस्य तत्तद्राशिप्रवेशकालिकलक्षणेभ्यो वृष्ट्यादिज्ञानम् –**

[2]मीने मेषे च कन्यायां कर्कटे च ततः शृणु ।
सङ्क्रान्तौ देवि वर्षन्ति तदाह्ने विजयो भवेत् ॥
राज्ञां चाथ द्वितीयेऽह्नि सस्यमुत्तममुत्तमम् ।
तृतीयेऽह्नि सुभिक्षं स्याच्चतुर्थे चैव मिश्रितः ॥
चौराग्निः पञ्चमे विद्यात्षष्ठेऽह्नि विजयो भवेत् ।
सप्तमेऽह्नि यदा देवि नैव वर्षेत् कदाचन ॥
प्रजाव्याधिस्तथा रोगं सुभिक्षं कृष्यते तदा ।
सर्वोपद्रवनाशाय सप्तमे च प्रवर्षणम् ॥
सिंहे मित्रे कुतो वृष्टिरथवा वृष्टिर्निरन्तरम् ।
पञ्चायणा यदा भिन्नास्तदा वृष्टिर्न जायते ॥

---

१. घाघ और भड्डरी की कहावतें ॥

२. मेघमाला । स० भ०पु० पाण्डुलिपिसंख्या ३७२०२ । पृ० २८ । श्लो० २८-३२ ॥

## तत्तन्मासेषु सङ्क्रान्तिकालिकलक्षणानां फलम्—

अत्र पाण्डुलिप्यामुपलब्धः पाठो बहुशः संशोधनार्हः। तथा हि —

'कार्तिके मार्गशीर्षे च सङ्क्रान्तौ यदि वर्षति।
मध्यमं जायते शस्यं पौषे माघे सुभिक्षदम्॥
पौषे माघे च सङ्क्रान्तौ यदि वर्षति माधवः।
बहुक्षीरघृता गावो बहुसस्या वसुन्धरा॥

अत्र पाण्डुलिप्यामुपलब्धो' बहुसंख्यावसुन्धरेति पाठोऽशुद्धः। अतो बहुसस्येति पाठः स्वीकृतः।

फाल्गुने चैत्रमासे च सङ्क्रान्तौ यदि वर्षति।
विचित्रं जायते सस्यं वैशाखज्येष्ठयोस्तथा॥

विचित्रशब्देन सस्यानां स्वरूपविकृतिः सस्यहानिश्च ज्ञेया। सस्यानां वृक्षाणां वा स्वरूपविकृतिः विविधानुत्पातान् सूचयति। विषयोऽयं प्राच्यभारतीय–कृषिशास्त्रस्य उद्यानविद्याप्रकरणे स्पष्टीकरिष्यते।

आषाढे चैव सङ्क्रान्तौ यदि वर्षति माधवः।
जायन्ते व्याधयो घोरा ध्रुवं चैव तु देवराट्॥
श्रावणे तु यदा देवि सङ्क्रान्तौ वर्षणं भवेत्।
सुखं च विद्यते पूर्वं वृष्टिश्चैव तथा पुनः॥

अत्र पूर्वमिति शब्देन पूर्वशस्यं शरत्सस्यमिति ज्ञेयम्। पश्चाद्धान्यानि तावद् गैष्मिकधान्यानीति प्राच्यवर्णनपद्धतौ प्रयुक्तम्।

सर्वदा तु भवेत् भव्यं द्वौ मासौ वर्षते सदा।
धनधान्यसमायुक्तं नन्दते वर्धते प्रजा॥
मासि भाद्रपदे प्राप्ते वृष्टिः स्याद्यदि सङ्क्रमे।
बहुरोगकरा सा तु कथितं देव देवराट्॥
आश्विनस्य तु मासस्य सङ्क्रान्तौ यदि वर्षति।
शोभनं च भवेत्सर्वं धनधान्यं चतुष्पदम्॥
राजराष्ट्रप्रजानां च सर्वोपद्रववर्जितम्।

---

१. गुरुसंहिता। स० भ० पु० पाण्डुलिपिसंख्या ३४७२५। पृ० ५३। श्लो० ३०-४१॥

### गर्गमते सङ्क्रान्ति-कालिकवृष्ट्यादि-लक्षणानि—

प्रसङ्गेऽस्मिन् गर्गमतमपि समुपन्यस्तम्। अत्र बहुशः पाठोऽशुद्धः पर्यवेक्षणैः संशोधनमर्हति। तथा हि—

[1]ऊर्जः सहस्तपस्येषु चैत्रे नभसि भाद्रके।
अशुभदिने सङ्क्रमाच्च यदा वर्षति माधवः॥
पौषे माघे च वैशाखे शुक्राषाढाश्विनेषु च।
सङ्क्रान्तौ वर्षणं चेत्स्यात् तदा वृष्टिः सुशोभना॥

### सूर्यस्याद्रासङ्क्रान्तिमाश्रित्य वृष्ट्यादेर्ज्ञानम्—

सूर्यस्याद्राप्रवेशतिथिं, वारं, नक्षत्रं वा अधिकृत्य प्राच्यैर्वृष्ट्यादिविषयकाणि पर्यवेक्षणानि कृतानि। पर्यवेक्षणानामेतेषां फलं सार्वदेशिकं नास्ति। विन्ध्यपर्वतस्य दक्षिणभाग एवैतेषां सूर्यस्याद्राप्रवेशकालिकलक्षणानां फलं दृश्यते। तथा हि संवत्सरफलग्रन्थे—

'[1]विन्ध्यस्य दक्षिणे देशे फलमाद्राप्रवेशजम्।'

### सूर्यस्याद्राप्रवेशतिथिमाश्रित्य वृष्ट्यादिज्ञानम्—

[2]प्रतिपद् यदि चाद्रायां प्रवेशः शुभदो रवेः।
द्वितीये सस्यवृद्धिः स्यात् तृतीये त्वीतितो भयम्॥
चतुर्थ्यामशुभः प्रोक्तः पञ्चम्यामुत्तमोत्तमः।
षष्ठ्यां धनसमृद्धिः स्यात् सप्तम्यां क्षेममुत्तमम्॥
अष्टम्यां सस्यवृद्धिः स्यान्नवम्यां त्वीतितो भयम्।
दशम्यां शुभदः प्रोक्तस्त्वेकादश्यां सुभिक्षकृत्॥
द्वादश्यां शुभदः प्रोक्तस्त्रयोदश्यां जलप्रदः।
भूते स्वर्धविनाशाय पूर्णे पूर्णफलप्रदः॥
अमायां राज्यनाशाय पक्षयोरुभयोरपि॥

---

१. उक्तस्थले समुद्धृतम्॥

१. संवत्सरफलम्। स० भ० पु० पाण्डुलिपिसंख्या ३४३६८। पृ० १७॥

२. संवत्सरफलम्। उक्तपाण्डुलिप्याम्। पृ० ११॥

आर्द्राप्रवेशवाराद् वृष्ट्यादेर्ज्ञानम्—

[1]रौद्रेऽर्को भानुवारे स्यात् प्रवेशे पशुनाशनम् ।
सोमे सुभिक्षदः प्रोक्तो भौमे निधनमाप्नुयात् ।।
लोको राजा बुधे क्षेमं गुरौ चार्थसमृद्धये ।
शुक्रे शान्तिकरः प्रोक्तो मन्दे मन्दफलं भवेत् ।।

आर्द्राप्रवेशनक्षत्राद् वृष्ट्यादेर्ज्ञानम्—

[2]प्रविष्टे रौद्रनक्षत्रे ह्यश्विन्यां च शुभं भवेत् ।
भरण्यामशुभं प्रोक्तं कृत्तिकायामवर्षणम् ।।
धातृद्वये सुभिक्षं स्याद् रौद्रर्क्षे रौद्रकृद् भवेत् ।
पुष्ये जलप्लुताः लोकास्त्वादित्ये चाभिवृद्धये ।।
सार्पभे दारुणं प्रोक्तं सर्वसौख्यविनाशनम् ।
मघायां स्वल्पवृष्टिः स्याद् भाग्ये कीर्तिकरं जलम् ।।
उत्तरात्रितये वृद्धिः हस्ते सर्वसुखावहः ।
चित्रायां चित्रधान्यानि सदा शुभफलं भवेत् ।।
स्वातावश्वाभिवृद्धिः स्याद् विशाखा रोगनाशनम् ।
मैत्रे सर्वमहीपालाः सन्तुष्टाः सर्वजन्तवः ।।
ऐन्द्रे सर्पभयं कुर्यान्मूले सर्वभयावहः ।
तोयभे चाति युद्धं स्याद् विश्वभे श्रवणे शुभम् ।।
वासवर्क्षे तु धरणी सम्पूर्णा फलदायिनी ।
शतभे जलसम्पूर्णा पूर्वाभाद्रे सुशोभनम् ।।
नृपविध्वंसनादीनि पौष्णर्क्षे कुरुते ध्रुवम् ।।

भारतीय संवत्सरक्रमाद् वृष्ट्यादेः पूर्वज्ञानम्—

भारतीयं पञ्चाङ्गं सौरमण्डलीयानां समेषां ग्रह-नक्षत्रादीनाम् अवस्थान-गमन-सङ्क्रमणादीनि सम्यगधीत्य वैज्ञानिकविधिना प्रवर्तितं वर्तत इति न कस्यापि तिरोहितम् । यो ह्यत्र संवत्सरक्रमोऽङ्गीकृतः स केवलं कामप्यैतिहासिकीं घटनामनु-

१. अत्रैव ।।
१. अत्रैव ।

सृत्य न प्रवर्तितः; परं विधात्रा प्रवर्तितं युगक्रमं कल्पक्रमं चानुसृत्य वर्तते। इत्थं संवत्सरक्रममेनमाश्रित्य विधात्रा प्रवर्तितस्य जगतः क्रमस्यापि ज्ञानं कर्तुं शक्यते। अतएव प्राच्यैर्महर्षिभिराचार्यैश्च वृष्ट्यादीनाम् ऋतुपरिवर्तनानां ज्ञानाय भारतीय-पञ्चाङ्गमनुसृत्य पर्यवेक्षणानि विधाय ऋतुज्ञानस्य भारतीयपञ्चाङ्गानुवर्ती विधिः प्रवर्तितः। अस्मिन् विधौ क्वचिद् गणितेन क्वचिच्च सङ्क्रान्तिवाराद्याश्रितेन तिथिवाराश्रितेन वा विधिना वत्सरविशेषस्य राजमन्त्रिसस्याधिपादीनामानयनं कृत्वा तेषां वृष्ट्यादि-विषयकाणि फलानि विभाव्यन्ते। विधेरस्य मूलभूतः सिद्धान्तो ब्रह्मवैवर्तपुराणे वर्णित उपलभ्यते। तथा हि—

'सूर्यग्रस्तं च नीरश्च काले तस्मात् समुद्भवः।
सूर्यो मेघादयः सर्वे विधात्रा ते निरूपिताः॥
यत्राब्दे यो जलधरो गजश्च सागरो मतः।
सस्याधिपो नृपो मंत्री विधात्रा ते निरूपिताः॥
जलाढकानां सस्यानां तृणानाञ्च निरूपितम्।
अब्देऽब्देऽस्त्येव तत्सर्वं कल्पे कल्पे युगे युगे॥ इत्यादि॥

प्रसङ्गेऽस्मिन् एतदप्यवधेयं यद्यथा पूर्वं वर्णिते सङ्क्रान्तिफलविधौ सूर्यस्याद्रा-प्रवेशजं फलं विन्ध्यस्य दक्षिणे देश एव भवति तथैव विधावस्मिन् राज-मंत्रि-सस्याधिप-रसेश-नीरसेश-मेघेशानां फलं सार्वदेशिकं न भवति। अत्र राज्ञः फलं केवलं कम्बोज-कश्मीर-कलिङ्गदेशेषु प्रमुखं भवति। वत्सरमंत्रिणः फलं वाह्लिकान् मालवांश्च प्रमुखतया प्रभावयति। पौण्ड्रेषु विदर्भेषु च सस्याधिपफलं प्राधान्यमेति। रसेशफलं कोंकण-देशे मागधदेशे च प्रामुख्यमेति। नीरसेशफलं मालवदेशे वैशिष्ट्यमेति तथैव मेघेशफलं द्राविडदेशे गौडदेशे च चरितार्थं भवति। शेषं फलं तु विधावस्मिन् सार्वदेशिकं भवति। तथा हि—

कम्बोज-काश्मीर-कलिङ्गदेशे राज्ञः फलं वाह्लिकमालवेषु।
मंत्रिफलं पौण्ड्र-विदर्भदेशे सस्याधिनाथस्य फलं प्रधानम्॥
रसेशजं कोंकण-मागधे च स्यान्नीरसेशस्य च मालवाख्ये।
मेघेट्फलं द्राविडगौडयोश्च सर्वेषु देशेषु फलं तु शेषम्॥

---

१. ब्रह्मवैवर्तपुराणे। श्रीकृष्णजन्मखण्डे। अध्यायः २१। श्लो० १०५-१०७॥
१९५५ ईशवीये गुरुमण्डलग्रन्थमालाप्रकाशने पृ० ६७६॥
२. संवत्सरफलम्। स० भ० पु० पाण्डुलिपिसंख्या ३४३६८। पृ० १६॥

वत्सरे शाक-संवत्सरसंख्यां, सङ्क्रान्तिविशेषदिवसं, मासस्य तिथिविशेष-दिवसं वाऽऽश्रित्य निश्चितानां राज-मंत्रि-शस्याधिपप्रभृतीनां निर्देशः प्रायः प्राच्य-पद्धतिकेषु भारतीय-पञ्चाङ्गेषु कृतो भवति; परं कुत्रचित् पञ्चाङ्गनिर्माणपद्धतेर्भिन्न-त्वादेतेषां निर्णयेऽपि भेदो दृश्यते। अतो विधिविशेषादानीतानां राजमंत्रिप्रभृतीनां फलस्य वर्णनप्रसङ्गे तत प्रागेव तेषामानयनविधिरपि ग्रन्थेऽस्मिन् निर्दिश्यते। नीरसेशफलं वृष्ट्यादिज्ञानदृष्ट्या महत्त्वं नावहतीति तन्नात्र वर्ण्यते।

अयं विधिः सम्प्रत्यपि आंशिकरूपेण देशे प्रचलितो दृश्यते। प्रायो ग्रामेषु संवत्सरारम्भे ग्रामीणाः क्वचिदेकीभूय ग्रामपुरोहितादनेन विधिना वर्णितं संवत्सरफलं शृण्वन्ति। विधेरस्य संक्षिप्तं विवरणं यथावसरमपेक्षितैर्निदर्शनैः सह प्रस्तूयते। तथा हि—

## वृष्ट्यादिज्ञानाय वत्सरस्य राजमंत्रिणोरानयनविधयः —

भाविवत्सरस्य वृष्ट्यादीनां ज्ञानाय वत्सरस्य राज्ञो मंत्रिणश्चानयनस्य त्रयो विधयः प्राच्यग्रन्थेषु वर्णिताः, तत्रैको विधिर्गणितात्मकः, द्वितीयः सूर्यसङ्क्रान्ति-वाराश्रितः, तृतीयस्तिथिवाराश्रितश्च।

अत्र यद् विधीनां वैविध्यं तद्देशविशेषमूलकमस्ति यतो ह्येते विविधा विधयो देशस्य विभिन्नभागेषु प्रचलिताः आसन्। प्रथमं तावत्पराशरोक्तो गणितात्मको विधिः कथ्यते। तथा हि—

[1]'शाकं त्रिगुणितं कृत्वा द्वियुतं मुनिना हरेत्।
भागशिष्टो नृपो ज्ञेयो नृपान्मंत्री चतुर्थकः॥

अत्रैव पाठान्तरे—

शाकस्य कालस्य त्रिगुणीकृतस्य भुज-वाण-वेद-वसुभिर्युतस्य।
राजा च मन्त्री च वर्षाधिपश्च (सस्याधिपः) सप्तकृत्ता भवन्ति॥

अत्र द्वितीय पङ्क्तौ वर्षाधिपश्चेत्यनन्तरं सस्याधिप इत्यपि योजनीयं; श्लोक-सौष्ठवात्, गणितविधौ भुज-वाण-वेद-वसु इति संख्याचतुष्टयस्य योगकथनाच्च। इत्थं च कलिकातास्थ वङ्गवासीमुद्रणालयात् "कृषिसङ्ग्रह" इति नाम्ना प्रकाशिते बङ्ग-संस्करणे दत्तः पाठः समुचिततमः प्रतिभाति। अत्र योज्यानामङ्कानां विपर्ययः पर्य-वेक्षणैः परीक्षणमर्हति तथा हि—

---

१. कृषिपराशरः। पृ० ३। श्लो० १२॥

[1]शाकस्य कालं त्रिगुणीकृतश्च द्वि-बाण-वस्वब्धिसमन्वितश्च ।
राजा च मंत्री च जलाधिपश्च सस्याधिपः स्यान्मुनिभाजितेन ॥

वत्सरस्य राज-मंत्रि-शस्याधिपानामानयनस्य सङ्क्रान्तिवाराद्याश्रिता विधयः सरलतराः सन्ति । अस्मिन् विषये प्रयागस्थस्य सर-गंगानाथ-झा-अनुसन्धानसंस्थानस्य प्राचीनपाण्डुलिपिसङ्ग्रहे सङ्गृहीतः संवत्सरफलमिति[2], वाराणसेय-संस्कृत-विश्वविद्यालयस्य सरस्वतीभवन-ग्रन्थालयस्य पाण्डुलिपिसङ्ग्रहे सङ्गृहीतः [3]संवत्सरफलमिति च ग्रन्थौ द्रष्टव्यौ वर्तेते । विषयस्यास्य चर्चा कल्पलता-प्रभृतिषु ग्रन्थेष्वपि कृता वर्तते । तथा हि तिथिवाराश्रितो द्वितीयो वत्सरराजानयनविधिः --

चैत्रशुक्लप्रतिपदि यो वारो भूपतिर्मतः ।

उक्तविधिभ्यामानीतस्य वत्सरराजस्य वृष्टिविषयकं फलं तावद् वर्ण्यते तथा हि—

**गणितविधौ वत्सरेशस्य वृष्टिफलम्--**

अत्र फलवर्णनशैली क्वचित्प्रत्यक्षा क्वचिदप्रत्यक्षा च । तद्यथा रोगोपद्रवा अकालवृष्टिं सूचयन्ति ।

[4]चित्तलाऽर्के नृपे वृष्टिर्वृष्टिरुग्रा निशापतौ ।
वृष्टिर्मन्दा सदा भौमे चन्द्रजे वृष्टिरुत्तमा ॥
गुरौ च शोभना वृष्टिर्भार्गवे वृष्टिरुत्तमा ।
पृथ्वी धूलिसम्पूर्णा वृष्टिहीना शनौ भवेत् ॥
चक्षूरोगो ज्वरारिष्टं सर्वोपद्रव एव च ।
मन्दा वृष्टिः सदा वातो यत्राब्दे भास्करो नृपः ॥

अत्र पाठान्तरे—

यस्मिन् संवत्सरे चैव अर्को राजा भविष्यति ।
सस्यहानिर्भवेत्तत्र नित्यं रोगश्च मानवे ॥ इति ॥

---

१. कृषिसङ्ग्रहे । श्लो० २२ ॥

२. प्रयागस्थ-सर-गंगानाथ झा-अनुसंधानसंस्थानस्य प्राचीन-पाण्डुलिपि-सङ्ग्रहे ग्रन्थ-सं० १११६।२२८ ॥

३. संवत्सरफलम् । स० भ० पु० पाण्डुलिपिसंख्या ३४३६८ । पृ० ४ ॥

४. कृषिपराशरः । पृ० ३-५ । श्लो० १३-२१ ॥

यस्मिन् संवत्सरे चैव चन्द्रो राजा भवेद् ध्रुवम् ।
कुर्यात् शस्यान्वितां पृथ्वीं नैरुज्यं चापि मानवे ॥
शस्यहानिर्भवेत्तत्र नित्यं रोगश्च मानवे ।
यस्मिन्नब्दे कुजो राजा शस्यशून्या च मेदिनी ॥
नैरुज्यं सुप्रचारश्च सुभिक्षं क्षितिमण्डले ।
यत्राब्दे चन्द्रजो राजा सर्वशस्या च मेदिनी ।

अत्र यातायातसौविध्यसूचकः सुप्रचारशब्दः कालोचितां वृष्टिं सूचयति तथैव सुभिक्षशब्दात् सुवृष्टिर्ज्ञेया ।

पाठान्तरेषु —

कुर्यात् शस्यवतीं पृथ्वीं नैरुज्यं सर्वमानवे ।
यस्मिन्नब्दे बुधो राजा वसुधा धर्मशालिनी ॥
यत्राब्दे चन्द्रजो राजा सर्वशस्या च भूर्भवेत् ।
धर्मे स्थितिर्मनः स्थैर्यं वृष्टिकारणमुत्तमम् ॥ इति ॥
धर्मस्थितिर्मनः स्थैर्यं सुभिक्षं क्षितिमण्डले ।
यस्मिन्नब्दे गुरू राजा सर्वा वसुमती मही ॥

अत्र पाठान्तरे —

नैरुज्यं सुप्रचारश्च सुभिक्षं क्षितिमण्डले ।
यस्मिन्नब्दे गुरू राजा सर्वशस्यान्विता क्षितिः ॥ इति ॥
नृपाणां वर्धनं नित्यं धनधान्यादिकं फलम् ।
राजा दैत्यगुरुः कुर्यात् सर्वशस्यं रसातलम् ॥

अत्र पाठान्तरे —

धर्मस्थितिः सदा वृष्टिर्मनुष्या नीरुजस्तथा ।
यस्मिनब्दे भृगूराजा सर्वशस्या च मेदिनी ॥ इति ॥
सङ्ग्रामो वातवृष्टिश्च रोगोपद्रव एव च ।
मन्दा वृष्टिः सदा वातो नृपे संवत्सरे शनौ ॥

अत्र वातवृष्टिरितिकथनेन वातेन सहैव वृष्टिरिति ज्ञेयम् । वृष्टिरियं कृषेर्हानिकरी भवति, मानवेषु पशुषु च विविधान् रोगान् जनयति । पाठान्तरेषु वर्णितान्यपि फलानि सदृशान्येव ॥

## तिथिवाराश्रितविधौ वत्सरेशस्य वृष्ट्यादिफलम् —

चैत्रशुक्लप्रतिपत्तिथेर्वारमाश्रित्य यो वत्सरेशो निश्चीयते तस्य निर्देक्ष्यमाणं वृष्टिफलं प्राच्यग्रन्थेषु वर्णितमुपलभ्यते । अत्रानेकत्र छन्दोरचनासम्बन्धिन्यो भाषासम्बन्धिन्यश्च त्रुटयो विद्यन्ते परमाशयस्तु स्पष्टमवगम्यत एव । फलमिदं गणितविधौ वर्णितेन फलेन समानमेव । तथा हि —

[1]सूर्ये नृपे स्वल्पजलाश्च मेघाः स्वल्पं पयो गोषु जनेषु पीडा ।
स्वल्पं सुधान्यं फलमल्पवृक्षाश्चौराग्निबाधा निधनं नृपाणाम् ॥

चन्द्रे नृपे मङ्गलशोभनानि प्रभूतवृष्टिः प्रचुरं च धान्यम् ।
सौख्यं जनानामुदयो नृपाणां प्रशाम्यते व्याधिजरा नराणाम् ॥

भौमे नृपे वह्निभयं जनक्षयं चौराकुलं पार्थिवविग्रहश्च ।
दुःखं प्रजा व्याधिवियोगपीडा स्वल्पं पयो मुञ्चति वारिवाहः ॥

बुधस्य राज्ये सजलं महीतलं गृहे गृहे तूर्यविवाहमङ्गलम् ।
प्रवर्तते दानदया जना अपि स्वास्थ्यं सुभिक्षं धनधान्यसङ्कुलम् ॥

गुरौ नृपे वर्षति कामदं जलं महीतले कामदुघाश्च धेनवः ।
यजन्ति विप्रा बहवोऽग्निहोत्रिणो महोत्सवः सर्वजनेषु वर्तते ॥

शुक्रस्य राज्ये बहुशस्यसङ्कुला सुतीव्रवेगाः सरितोऽम्बुराशिभिः ।
फलन्ति वृक्षा बहुगोप्रसूतिर्वसुन्धरा पार्थिवसौख्यसंयुता ॥

शनैश्चरे भूमिपतौ सकृज्जलं प्रभूतरोगैः परिपीड्यते जनः ।
युद्धं नृपाणां गदतस्कराद्यैर्भ्रमन्ति लोकाः क्षुधिताश्च देशान् ॥

## गणितविधौ वत्सरमंत्रिणोवृष्टिफलम् —

गणितविधौ वत्सरमंत्रिणो वृष्टिफलं वत्सरेशवृष्टिफलतुल्यमेव कथितम् । तथा हि —

[2]यथा वृष्टिफलं प्रोक्तं वत्सरग्रहभूपतौ ।
तद्वद् वृष्टिफलं ज्ञेयं विज्ञैर्वत्सरमन्त्रिणि ॥

---

१. संवत्सरफलम् । स० भ० पु० पाण्डुलिपि संख्या ३४३६८। पृ० ४ ॥
२. कृषिपराशरः । पृ० २२ । श्लो० २२ ॥

## वृष्टिज्ञानाय सङ्क्रान्तिवारविधौ वत्सरमन्त्रिण आनयनम् —

अस्मिन् विधौ मेषसंक्रान्तिदिवसेशो भाविनो वत्सरस्य मन्त्री कथ्यते। केषांञ्चिन्मते अयमेव भूपतिरपि भवति। तथा हि —

[१]मेषसङ्क्रान्तिवारेशो भवेत् सोऽपि च भूपतिः।

## सङ्क्रान्तिवारविधौ वत्सरमन्त्रिणो वृष्टिफलम् —

मेषसङ्क्रान्तिवारेशस्य वत्सरमन्त्रिणो वृष्टिफलं प्राच्यग्रन्थेषु वर्णितमुपलभ्यते। अत्रापि समुपलब्धे पाठे छन्दोरचनासम्बन्धिन्यो भाषासम्बन्धिन्यश्च त्रुटयः सन्ति। तथा हि —

[२]नृपभयं गदितोऽपि हि तस्करात्प्रचुरधान्यधनादिमहीतले।
रसचयं हि समर्घतमं तदा रविरमात्यपदं हि समागतः॥
शशिनि मन्त्रिगते बहुसस्यवत्यपि धरा रमते सुखमण्डिता।
वियति वारिधरा बहुवर्षिणो जनपदः सुखराशिसुशोभितः॥
अवनिजो ननु मन्त्रिकतां गतो भवति दस्युगदादिजवेदना।
जनपदेषु सुखं न चयो जयो न बहु गोषु पयो द्विजकर्म च॥
शशिसुते यदि मन्त्रिसमागते स्वपतिना रमते मदनक्रियाम्।
बहुधनं बहु वारिसमन्वितं यवमसूरचणां न समर्घता॥
विविधधान्ययुता खलु मेदिनी प्रचुरतोयघना मुदिता भवेत्।
नृपतयो जनपालनतत्पराः सुरगुरौ ननु मन्त्रिसमागते॥
भृगुसुते ननु मन्त्रिपदं गते शलभशूकरमूषकरौहिषः।
भवति धान्यसमर्घतया भयं जनपदेषु जलं सरितोऽधिकम्॥
रविसुते यदि मन्त्रिणि पार्थिवा विनयसंरहिता बहुदुःखदाः।
न जलदा जलदा जनतापदा जनपदेषु सुखं न धनं क्वचित्॥

## ग्रैष्मिकवृष्टिसूचकः सस्याधिपः —

वत्सरीयसस्याधिपं ज्ञात्वा भाविवत्सरे शारद्यधान्यनिष्पत्तिहेतुभूताया ग्रैष्मिकवृष्टेः पूर्वानुमानं कर्तुं शक्यते। सस्याधिपानयनस्य गणितविधिस्तु वत्सर-

१. संवत्सरफलम्। पृ० ४॥
२. अत्रैव। पृ० ४–५॥

राजमन्त्रिणोरानयनस्य गणितविधिवर्णनप्रसङ्गे कथितः। सङ्क्रान्तिवाराश्रितो विधिः पुनरत्र कथ्यते। तथा हि—

## सस्याधिपानयनम्—

[1]कर्कसङ्क्रान्तिवारेशः सस्यपः परिकीर्तितः ॥

अत्र सस्याधिपः सस्येशो वा पूर्वधान्येशः शारद्यधान्येश इत्याशयः। पश्चाद् धान्यपतिस्तु वक्ष्यमाणो ग्रीष्मधान्येशो धान्येश इति वा। तदुक्तं संवत्सर-फलग्रन्थे—

[2]सस्येशः पूर्वधान्येशः पश्चाद्धान्यपतिस्त्वयमिति।

उक्तविधिना विनिश्चितस्य सस्याधिपस्यान्यैः फलैः सह भाविवत्सरीय-ग्रैष्मिक-वृष्टिविषयकं फलमपि प्राचीनग्रन्थेषु वर्णितमुपलभ्यते। यथा पूर्वं स्पष्टीकृतं यत्सस्याधिपः शारद्यसस्यानां समृद्धिसूचको भवति। शारद्यसस्यानां निष्पत्तिश्च ग्रैष्मिकवृष्ट्यधीना। अतः सस्याधिपात् ग्रैष्मिकवृष्टिरेवानुमिता भवति। पाण्डु-लिपिभ्यः समुद्धृते वृष्टिफलेऽस्मिन् पाठो बहुशस्त्रुटिपूर्णः पर्यवेक्षणैः परीक्षणार्हश्च। तथा हि—

## वत्सरीयसस्याधिपस्य वृष्टिफलम्—

[3]सस्याधिनाथे तरणौ हि पूर्वं धान्यं समर्घं बहवोऽपि चौराः।
युद्धं नृपाणां जलदा जलाढ्याः स्वल्पं च सस्यं बहुभूरुहाश्च ॥

सस्याधिपे शीतकरे प्रजासुखं मेघः पयो मुञ्चति गौःपयोधुक्।
देवद्विजाराधनतत्परा नृपा धरा भवेद् धान्यधनौघपूर्णा ॥

प्रथमधान्यपतौ धरणीसुते गजतुरंगखरोष्ट्रगवामपि।
प्रभवदो बहुरोगगणो जलं न समसौख्यकरं तुषधान्यहृत् ॥

जलधरा जलराशिमुचो भृशं सुखसमृद्धियुतं निरुपद्रवम्।
द्विजगणः श्रुतिपाठकरः सदा प्रथमसस्यपतौ सति बोधने ॥

सस्यपतौ सुरराजपुरोहिते सकलसौख्ययुता द्विजपूर्वकाः।

---

१. अत्रैव। पृ० ५॥
२. अत्रैव पृ० ५॥
३. पूर्वोक्ता पाण्डुलिपिः। पृ० ५॥

जलधरा जलदा बहुसस्यदा रसपयांसि बहूनि वसूनि वै ॥
शुक्रो यदा धान्यपतिर्धरायां मेघो जलं वर्षति शोभनं प्रियम् ।
गोधूमशालीक्षुधनं प्रियंगुवृक्षेषु पुष्पाणि सुखप्रदानि ॥
रविसुते यदि धान्यपतौ जनो नृपतिभिः परिपीडितविग्रहः ।
गदभयं तुषधान्यहरंस्तदा दुरितवादविवादयुता नराः ॥

अत्र प्रथमसस्यपतिरित्यस्य पूर्वधान्येशः सस्याधिप इति वाऽर्थो बोध्यः ।

## वृष्टिसूचकाश्चत्वारो मेघाः —

भाविवत्सरीयवृष्टिसूचकाश्चत्वारो मेघा भवन्ति । एतेषामानयनं शाकाब्दाङ्कमाश्रित्य गणितविधिना क्रियते । नामान्येतेषाम् आवर्तसंवर्त-पुष्करद्रोणेति च सन्ति । तथा हि—

## मेघानयनविधिः —

[1]शाकाब्दं वह्निसंयुक्तं वेदभागसमाहृतम् ।
शेषं मेघं विजानीयादावर्त्तादि यथाक्रमम् ॥
आवर्तश्चैव संवर्तः पुष्करो द्रोण एव च ।
चत्वारो जलदाः प्रोक्ता आवर्तादियथाक्रमम् ॥

उक्तविधिना ज्ञातानां चतुर्णां मेघानां भाविवत्सरीयं वृष्टिफलं वत्सरीयवृष्टिमानस्य सामान्यं ज्ञानं कारयति । तथा हि—

## चतुर्णां मेघानां वृष्टिप्रमाणम्—

यस्मिन्नब्दे आवर्तनामा मेघो भवति तस्मिन्नब्दे कुत्रचिद् वृष्टिः, कुत्रचिद् वृष्टेरभावः, संवर्तमेघे तु सर्वत्र समानरूपेण वृष्टिः, पुष्करे वृष्ट्यभावः, द्रोणे च अतिवृष्टिः भवति । तथा हि—

[2]एकदेशेन चावर्ते संवर्ते सर्वतो जलम् ।
पुष्करे दुष्करं वारि द्रोणे बहुजला मही ॥

ग्रन्थान्तरे वर्णितं चतुर्णां मेघानां वृष्टिफलमपि समानमेव । तथा हि —

[3]आवर्ते छिन्नवृष्टिश्च संवर्ते जलपूरिता ।
पुष्करे मन्दवृष्टिः स्याद् द्रोणो वर्षति सर्वदा ॥

---

१. कृषिपराशरः । पृ० ६ । श्लो० २३, २४ ॥
२. अत्रैव । श्लो० २५ ॥
३. संवत्सरफलम् । स० भ० पु० पाण्डुलिपिसंख्या ३४३६८ । पृ० १० ॥

**वृष्टि-सूचका नवमेघाः —**

केषाञ्चिद् विदुषां मते भाविवत्सरीयवृष्टिसूचका नवमेघाः सन्ति। एतेषामप्यानयनं गणितविधिना शाकाब्दाङ्कमाश्रित्य क्रियते। एते मेघाश्च आवर्त-संवर्त-पुष्कर-द्रोण-काल-नील-वरुण-वायु-तमः संज्ञका भवन्ति। तथा हि—

**नवमेघानयनविधिः —**

[१]शाकः सूर्येषुचन्द्रै (१५१२)श्च हीनः शेषसमाः समाः।
गतास्ते नवभिस्तष्टाः शेषं हाराद् विशोधयेत्॥
ततश्चावर्तसंवर्तपुष्करद्रोणकालकाः।
नीलश्च वरुणो वायुस्तमो मेघाः स्मृता नव॥

उक्तविधिना समानीतानां नवमेघानां भाविवृष्टिविषयकं फलमपि प्राचीनग्रन्थेषु वर्णितमुपलभ्यते। आवर्त-संवर्त-पुष्कर-द्रोणानामस्मिन् मते कथितं फलमपि प्रायः पूर्ववदेवास्ति। अत्र केवलं संवर्तफले भिन्नता दृश्यते। पूर्वमते संवर्ते वृष्टिः कथिता परं नवमेघमते संवर्ते वायुकोपोऽपि वर्णितः। आवर्तादिषु नवसु मेघेषु यस्मिन् वत्सरे यो मेघो भवति तस्मिन् वत्सरे तदनुरूपा वृष्टिर्जायते। तथा हि—

**नवमेघानां वृष्टिफलम् —**

[२]आवर्ते मन्दतोयं च संवर्ते वायुपीडनम्।
पुष्करे मन्दतोयं च द्रोणे वृष्टिः सुशोभना॥
अल्पवृष्टिश्च काले स्यान्नीलः क्षिप्रं प्रवर्षति।
वरुणे त्वर्णवाकारं वायुर्वर्षाविनाशनम्॥
तमो मेघे न वृष्टिः स्यान्मेघानां फलमीदृशम्॥

**शारद्यवृष्टिसूचको धान्येशः —**

सस्याधिपप्रसङ्गे तावत्स्पष्टीकृतं यत् सस्याधिपतिः सस्येशो वा कर्कसंक्रान्तिवारेशो भवति। गणितविधिनाऽप्यस्यानयनं शास्त्रेषु वर्णितमुपलभ्यते तदस्माभिः पूर्वं वर्णितम्। अयं सस्येशः शारद्यधान्यानां शरत्सस्यस्य वा साफल्यमसाफल्यं तन्निष्पत्तिहेतुभूतां शरत्कालीनां वृष्टिं वा सूचयति। तथैव धान्येशो ग्रैष्मिकसस्यानां

१. अत्रैव। पृ० ९–१०॥
२. अत्रैव। पृ १०॥

तन्निष्पत्तिमूलक-वृष्ट्यादेश्च सूचको भवति। वत्सरे यो धनसंक्रान्तिवारेशः स एव धान्येशः कथ्यते। तथा हि—

**धान्येशानयनम्—**

[1]धनसंक्रान्तिवारेशो धान्येशः परिकीर्तितः।
सस्येशः पूर्वधान्येशः पश्चाद्धान्यपतिस्त्वयम्॥

**धान्येशस्य वृष्टिफलम्—**

वत्सरीयधान्येशस्य वृष्टिसम्बन्धिफलं प्राच्यग्रन्थेषु वर्णितमुपलभ्यते। अत्र भाषा बहुशस्त्रुटिपूर्णा पाठश्च संशोधनमर्हति। तथा हि—

[2]पश्चाद्धान्याधिपे सूर्ये पश्चाद्धान्यं तदा न हि।
विग्रहो भूभृतां, धान्यं महर्घं, ज्वरपीडनम्॥
चन्द्रे धान्याधिपे जाते प्रजावृद्धिः प्रजायते।
गोधूमाः सर्षपाश्चैव गोषु क्षीरं तदा बहु॥
भूमिजे ग्रीष्मधान्येशे ग्रीष्मधान्यमहर्घता।
शालीक्षुघृततैलानि महर्घाणि भवन्ति हि॥
बुधे धान्याधिपे मेघा जलं मुञ्चन्ति तद् भृशम्।
सैन्धवे लाटदेशे च माधवोऽल्पं च वर्षति॥
गुरौ धान्यपतौ याते यवगोधूमशालयः।
पच्यन्ते सर्वदेशेषु यज्वानो भूरि भूमिजाः॥
शुक्रे पश्चिमधान्येशे समर्घं च जलं भुवि।
रसकार्पासगोधूमाः प्रलयं भूरि भूमिजाः॥
शनौ पश्चिम-धान्येशे पश्चाद्धान्यं न पच्यते।
सस्यं महर्घतां याति स्वल्पं क्षीरं गवामपि॥

**वृष्टिसूचको मेघेशः —**

वत्सरीयमेघेशस्य ज्ञानं भाविवत्सरीयवृष्टिज्ञाने सहायकं भवति। सूर्यस्यार्द्रा-नक्षत्रप्रवेशदिवसस्येशो वत्सरस्य मेघेशः कथ्यते। तथा हि—

१. पूर्वोक्त-पाण्डुलिप्याम्। पृ० ५॥
२. अत्रैव। पृ० ६॥

**मेघेशानयनविधिः —**

[1]आर्द्रा-प्रवेशे यो वारो मेघेशः परिकीर्तितः ।

**मेघेशस्य वृष्टि-फलम्—**

उक्तविधिना ज्ञातस्य मेघेशस्य वृष्ट्यादिविषयकं फलं प्राच्यपाण्डुलिपिभ्य उद्ध्रियते । अत्र मङ्गलादारभ्य शनिं यावत् पञ्च ग्रहा मेघेशत्वमुपगता वृष्टिविषये विशेषफलकारका भवन्ति । प्रसङ्गेऽस्मिन् या सामग्री प्राच्यग्रन्थेषूपलब्धा तत्र भाषा बहुशस्त्रुटिपूर्णा संशोधनार्हा च । तथा हि—

जलदपो यदि वासरपस्तदा सरसि वै रमते जनता रसम् ।
यवचणेक्षुनिवारसुशालिभिः सुखचयः सुलभो भुवि वर्तते ॥
शशिनि तोयदपे यदि गोमहिष्यजाव्यादिषु दुग्धरसं तदा ।
फलवती धनधान्यवती धरा विविधभोगवती ननु भामिनी ॥
अवनिजे जलदस्य पतौ भुवि श्रुतिविचारविहीनधराऽमराः ।
क्वचिदपि प्रचुरं जलमल्पकं क्वचिदपि प्रशमो बहुतापदः ॥
अमृतरश्मिसुते यदि वारिपे बहुजलं तुषधान्यरसादिकम् ।
द्विजवराय अनुत्सुकचेतसो विविधसौख्ययुता धरणी तदा ॥
गुरुरपि प्रियवृष्टिकरः सदाऽखिलविलासवती धरणी तदा ।
श्रुतिविचारपरा नरपालका रससमृद्धियुताऽखिलमानवाः ॥
भृगुसुतो जलदस्य पतिर्यदा जलमुचो जलदा दिशि शोभनाः ।
धननिधानयुता द्विजपालका नृपतयो जनतासुखदायकाः ॥
रविसुते जलदस्य पतौ भवेद् विरलवृष्टिवती वसुधा तदा ।
मनसि तापकरो नृपतिः सदा विविधरोगरता जनता मता ॥

**वृष्ट्यादिसूचको रसेशः —**

वत्सरे तुलासङ्क्रान्तिवारो रसेशः कथ्यते । प्राच्यैर्हि रसेशस्य विषये प्रभूतानि पर्यवेक्षणानि कृतानि तेषां फलं च वर्णितम् । रसेशस्य ज्ञानेन भाविवत्सरस्य वृष्ट्यादेर्ज्ञानं कर्तुं शक्यते । रसेशस्यानयनविधिः प्राचीनग्रन्थेषु वर्णित उपलभ्यते । तथा हि—[2]

१. अत्रैव । पृ० ६ ॥
२. अत्रैव ॥

**रसेशानयम् —**

[1]तुलासङ्क्रान्तिदिवसे यो वारः स रसाधिपः ॥

**रसेशस्य वृष्टिफलम्—**

उक्तविधिना ज्ञातस्य रसेशस्य वृष्ट्यादिविषयकं फलं प्राच्यग्रन्थेषु वर्णितमुपलभ्यते । अस्माद् भविवत्सरीयवृष्टेः पूर्वानुमानं कर्तुं शक्यते । विषयेऽस्मिन् या सामग्री ग्रन्थेषूपलब्धा तत्र भाषा बहुत्र संशोधनार्हा, पाठश्चाप्यनेकत्र खण्डितः ।

[2]रसपतौ तरणौ धरणी तदा विरसभोगरताऽल्पपयोधरा ।
वसनतैलघृतप्रियमानवाः सुखरसं न भुनक्ति महीपतिः ॥
यदि विधौ रसपे भुवि मानवो नवनवा युवती बुभुजे प्रियाम् ।
जलधरा बहुवारिविधायका रसवती धनधान्यवती मही ॥
यदि धरातनयो रसपो भवेन्न रसराशियुता जनता शुभा ।
नरपतिर्विषमो जनतापदे न जलदो बहुवृष्टिकरो भुवि ॥
रसपतौ द्विजराजसुते मही सुलभधान्यघृतादियुता जनाः ।
प्रमुदिता वरनायकपालिता बहुजलाखिलदेशसुरक्षिताः ॥
यदि गुरौ रसपे जनसौख्यदा कमलवन्ति सरांसि तृणानि च ।
जनपदा द्विजपूजनतत्परा गजसुवाजिरथोष्ट्रगणैर्युताः ॥
यजनयाजनकोत्सवसोत्सुका जनपदा जलतोषितमानवाः ।
सुखसुभिक्षसुमोदवती धरा धरणिपा हतपापगणाः प्रियाः ॥
रविसुते रसपे रससंक्षयो न जलदा गददाश्च पयोधराः ।
अजगवां गजवाजि खरोष्ट्रहा जनपदेषु नरा न रसैर्युताः ॥

**वृष्ट्यादिसूचकः फलेशः —**

वत्सरे मीनसंक्रान्तिदिवसस्याधिपः फलेशः कथ्यते । फलेशमाश्रित्य वृष्टिज्ञानार्थं प्राच्यैर्यानि पर्यवेक्षणानि कृतानि तेभ्यो भाविवत्सरीयवृष्टेर्ज्ञानं भवति । अस्यानयनविधिः प्राच्यग्रन्थेषु वर्णित उपलभ्यते । तथा हि—

---

१. पूर्वोक्त पाण्डुलिप्यां पृ० ६ ॥

२ अत्रैव ॥

**फलेशानयनम् —**

[1]मीनसंक्रान्तिदिवसः फलेशश्च प्रकीर्तितः ।

अयं मीनसङ्क्रान्तिदिवसेशः फलेशो विशेषतो वसन्तकाले जायमानायाः फलपुष्प-समृद्धेः सूचको भवति । अस्माच्च वसन्तकालिकफलपुष्पादिनिष्पत्तिहेतुभूतानां वृष्ट्यादीनां ज्ञानं भवति ।

**फलेशस्य वृष्ट्यादिफलम् —**

उक्तविधिना ज्ञातस्य फलेशस्य यद् वृष्टिविषयकं फलं ग्रन्थेषु वर्णितमुपलभ्यते तत्र प्राच्यानामप्रत्यक्षा शैली बहुशः प्रयुक्ताऽस्ति । लिपिकृतां त्रुटिवशादत्रापि भाषा बहुत्र संशोधनार्हा परमाशयस्तु स्पष्टः । तथा हि[2]—

**आदित्यस्य फलेशत्वे—**

द्रुमवती फलपुष्पवती धरा प्रमुदिता फलभोगविशेषता ।
बहु जलं जलदो भुवि मुञ्चति क्वचिदपि प्रमितं फलपो रविः ॥

**चन्द्रस्य फलेशत्वे—**

यदि विधुः फलपो द्रुमराशयः फलयुता व्रततिः कुसुमैर्युता ।
द्विजमुखा वरभोगसमन्विता नृपतयो नयनाटनतत्पराः ॥

अत्र द्रुमलतादीनां फलकुसमसमृद्धिः, द्विजानां सौख्यं, नृपाणां नीतिपरायणत्वादिभिः सुवृष्टिमूलकैर्विषयैः वत्सरे सुवृष्टिः सूच्यते ।

**मङ्गलस्य फलेशत्वे—**

फलपतिर्यदि भूतनयो भवेन्न बहुपुष्पफलान्वितपादपाः ।
गदभयान्वितदेशजनास्तदा नृपतयो बहुविग्रहकारकाः ॥

अत्र पादपानां फलपुष्पसमृद्ध्यभावः, रोगाणां प्रादुर्भावः, नृपविग्रह-प्रभृतयोऽवृष्टिमूलकाः कुवृष्टिमूलकाश्च विषया वत्सरे अवर्षणं कुवर्षणं वा सूचयन्ति ।

**बुधस्य फलेशत्वे—**

सति बुधे फलपे फलमुत्तमं जलधरा जलराशिमुचस्तदा ।
बहुतृणं कुसुमं कमलैर्युतो जनपदो जनसौख्यमुदान्वितः ॥

---

१. पूर्वोक्तपाण्डुलिप्यां पृ० ७ ॥

२. अत्रैव ॥

**गुरोः फलेशत्वे—**

सुरगुरुः फलनायकतां गतो गतभया वनराशिमहाद्रुमाः ।
यजनयाजनकोत्सवमन्दिराः श्रुतिविचारपरा द्विजपूर्वकाः ॥

अत्र महाद्रुमाणामपि समृद्धिः, यजनयाजनश्रुतिविचारादिभिः सुवृष्टिमूलकैर्विषयैर्वत्सरे सुवृष्टिः सूच्यते ।

**शुक्रस्य फलेशत्वे—**

यदि वसन्तपतिर्भृगुजो धरा मृदुकुमारमहीरुहराशयः ।
बहुफला नरनाथसुभोगदा द्विजवराः श्रुतिपाठपरायणाः ॥

अत्र पादपानां मृदुभिः सुकोमलैः पर्णैः फलैश्च युक्तता, द्विजानां शास्त्रविचारपरायणता-प्रभृतिभिः सुवृष्टिमूलकैर्विषयैः वत्सरे सुवृष्टिः सूच्यते ।

**शनेः फलेशत्वे—**

यदि शनिः फलपः फलहा भवेज्जनितपुष्पगणस्य द्रुमस्य च ।
हिमभयं वरतस्करजं तदा जनपदो गदराशि-समाकुलः ॥

अत्र द्रुमाणां फलपुष्पादिहानिः, जनानां रोगराशिः, तस्कराणां प्राबल्य-प्रभृतयो विषया हिमपातेन सहैव अवृष्टिं कुवृष्टिं वाऽपि सूचयन्ति ।

**वत्सरीयवृष्टि-सूचका द्वादशनागाः —**

प्राच्यैर्वत्सरे वृष्टिसूचका द्वादशनागाः कथिताः । एतेषां ज्ञानेन भाविवत्सरीयवृष्टेर्ज्ञानं भवति । नागानामानयनस्य गणितात्मको विधिग्रन्थेषु वर्णित उपलभ्यते । तथा हि—

**नागानयनम्—**

[१]गताब्दा द्वियुता सूर्यभक्तास्तत्रावशेषतः ।
सुबुद्धो नन्दिसार्गी च कर्कोटकः पृथुश्रवाः ॥
वासुकिस्तक्षकश्चैव कंबलाश्वतरावुभौ ॥
हेममाली नरेन्द्रश्च वज्रदंष्ट्रो वृषस्तथा ॥

---

१. अत्रैव । पृ० ६ ॥

## द्वादशनागानां वृष्ट्यादिफलम्—

उक्त विधिना समानीताः सुबुद्ध-नन्दिसारि-कर्कोटक-पृथुश्रवो-वासुकि-तक्षक-कम्बल-अश्वतर-हेममालि, नरेन्द्र-वज्रदंष्ट्र-वृषाख्या द्वादशनागाः सन्ति। एतेषां वृष्ट्यादिविषयकं फलं ग्रन्थेषु वर्णितमुपलभ्यते। तथा हि—

[1]सुबुद्धो बुद्धिकर्ता च वृष्टिः कर्षणसम्मता।
नन्दिसारे महावृष्टिर्नन्दन्ते च महाजनाः॥
कर्कोटके जलं नास्ति निधनं च महीपतेः।
पृथुश्रवा जलं स्वल्पं सस्यहानिः प्रजायते॥
वासुकिः सस्यकर्ता च बहुवृष्टिकरः शुभः।
तक्षके मध्यमा वृष्टिर्विग्रहो निधनं ध्रुवम्॥
कम्बले मध्यमा वृष्टिः शस्यं भवति शोभनम्।
जायतेऽश्वतरे स्वल्पं जलं शस्यं विनश्यति॥
हेममाले महावृष्टिर्नरेन्द्रः स्रवते महीम्।
वज्रदंष्ट्रे त्वनावृष्टिर्वृषे स्यादीतितो भयम्॥

इत्थं भारतीयपंचाङ्गानुवर्तिना अनेन विधिना वत्सरे भाविसुवृष्ट्यतिवृष्ट्यादीनां, हिमपाततुषारपातादीनाञ्च ज्ञानेन ऋतोः पूर्वसूचनाऽधिगम्यते। अयं तावद् दिङ्निर्देशः। विषयोऽयं सन्दर्भगतेष्वाकर-ग्रन्थेषु विस्तरेण द्रष्टुं शक्यते।

## नक्षत्रचक्रेभ्यो वृष्टिज्ञानम्—

प्राच्यभारतीयैः ऋतुवैज्ञानिकैः भाविन्या वृष्टेर्ज्ञानाय नक्षत्रचक्राणां कल्पनाः कृताः। एभ्यो नक्षत्रचक्रेभ्योऽपि वृष्टेः सामान्यं ज्ञानं भवति। निदर्शनरूपेण कानिचिन्नक्षत्रचक्राणि तावदत्रोपन्यस्यन्ते।

## वृष्टिसूचकं रोहिणीचक्रम्—

रोहिणीचक्रेऽस्मिन् तट-गिरि-सन्धि-समुद्रादीनामङ्कनं विधाय तत्र मेषार्कदिवसीयनक्षत्रादारभ्य वक्ष्यमाणविधिना नक्षत्राणामङ्कनं क्रियते। ततः पश्चाद् रोहिणीचक्रमाश्रित्य रोहिणीस्थितिं विज्ञाय वृष्टेः पूर्वानुमानं कर्तुं शक्यते। तथा हि—

[2]मेषार्कदिनभाद् ऋक्षाद् द्वयमब्धौ द्वयं तटे।
एकं गिरौ द्वयं सन्धौ चतुर्दिक्षु तथा न्यसेत्॥

---

१. पूर्वोक्तस्थले। पृ० ६॥
२. संवत्सरफलम्। स० भ० पु० पाण्डुलिपिसंख्या २४३९८। प० १०॥

साभिजित्त्रिक्रमेणैव फलं यत्र तु रोहिणी ॥
अतिवृष्टिः समुद्रे स्यात्तटे वृष्टिरवर्षणम् ।
गिरौ; सन्धौ खण्डवृष्टिरित्याहुः पूर्वसूरयः ॥
मेषार्काहेऽब्धिसंख्या वसुपितृहुतभुङ्मित्रयुग्मेऽतिवृष्टिम् ।
कालेवृष्टिं द्विदैवार्यमयमहरिभाजाङ्घ्रिमूलाहिचान्द्रे ॥
दास्त्रार्द्रेज्याम्बुबुध्न्याभिजिदनिलकरे खण्डवृष्टिं तु सन्धौ ।
चित्रादित्यान्त्यविश्वे दिशति जललवं रोहिणी पर्वतस्या ॥

**रोहिणीचक्रे समुद्रसन्धिगिरितटादीनामङ्कनविधिः —**

| | | |
|---|---|---|
| तट २ | समुद्र २ | सन्धि २ |
| गिरि १ | | गिरि १ |
| सन्धि २ | | तट २ |
| समुद्र २ | रोहिणी-चक्रम् | समुद्र २ |
| तट २ | समुद्र २ | सन्धि २ |
| गिरि १ | | गिरि १ |
| सन्धि २ | | तट २ |

**जीवनाथवर्णितं वृष्टिसूचकं सप्तनाडीचक्रम्—**

इत्थमेव वक्ष्यमाणं सप्तनाडीचक्रमाश्रित्यापि वृष्टेरनुमानं कर्तुं शक्यते। वनमालाग्रन्थे यदस्य वर्णनमुपलभ्यते तत्रैकत्र पाठः खण्डितोऽन्यत्र चन्द्रारौ

चन्द्रार्कौ वेतिपाठः सन्दिग्धः। क्वचित्पाठोऽस्पष्टोऽपि। अत्रोक्तः सप्तनाडीचक्रस्याङ्कनविधिरपि पूर्णतः स्पष्टो नास्ति परं रुद्रयामलगतस्वरोदयादुद्धृतं यद् वर्णनं "सप्तनाडीकं वर्षफणिचक्रमि" त्याख्यग्रन्थस्य पाण्डुलिप्यामुपलभ्यते तत्र चक्राङ्कनविधिः पूर्णतः स्पष्टः। तदतः परमुद्ध्रियते।

[1]कृत्तिकादियमान्तानि साभिजिद् भानि संलिखेत्।
सर्पाकृतिः स्यात्प्रस्तारः तद्वेधविधिरुच्यते॥
भचतुष्टय वेधेन नाडिकैका प्रजायते।
आद्या चण्डाऽनिला चान्या तृतीया दहनाभिधा॥
सौम्या चतुर्थी विज्ञेया नीराख्या पञ्चमी मता।
जला षष्ठी क्रमादेवममृता सप्तमी मता॥
ऊर्ध्वतः क्रमतस्तासां मन्द-भानु-महीसुताः।
गुरुभार्गवविच्चन्द्राश्चण्डादीनामधीश्वराः॥
सौम्या मध्यगता नाडी तत्पुरः पृष्ठभागतः।
उत्तरं दक्षिणे ज्ञेयं नाडिकानां त्रिकं त्रिकम्॥
क्रूरा दक्षिणपार्श्वस्थाः सौम्या उत्तरभागगाः।
मध्या मध्यगता नाडी ग्रहरूपफलप्रदा॥
इत्थाद्या यद्येकनाडीस्था ग्रहाः पापाः शुभा यदि।
महावातं तु चण्डायां वायव्यां वायुं विशेषतः॥
अग्निनाड्यां महादाहं कुर्वन्ति भुवि सर्वतः।
नामानुसारतोऽन्यत्र फलं कुर्वन्ति खेचराः॥
सौम्यान्नाडीगता मध्या नीरस्था मेघवाहकाः।
जलायां जलदश्चन्द्रः, चन्द्रनाडीगतो ग्रहः॥
फलमेकोऽपिसन्धत्ते स्वनाड्यां स्वफलप्रदः।
सर्वत्र नाडिकातुल्यं मङ्गलः कुरुते फलम्॥

---

१. वनमाला। स० भ० पु० पाण्डुलिपि सं० ३५३६५। पृ० ५॥
अध्यायः ५। श्लो० १-२१॥

यत्र नाड्यां गतश्चन्द्रस्तत्रगा यदि खेचराः ।
मित्रग्रहविभिन्ना वा तद्दिने जलमुत्तमम् ॥
एकनक्षत्रगे योगे ग्रहास्तत्र भवन्ति चेत् ।
तद्दिने महती वृष्टिर्यावत्तद्भागगो विधुः ॥

केवलैरिह संविद्धः पापैर्वाऽथ शुभग्रहैः ।
तत्र स्वल्पं जलं ज्ञेयं वाऽम्बरं मेघमेदुरम् ॥
पुंखेटयोर्मिथो वेधे वायुर्वहति सर्वतः ।
स्त्रीपुंखेटयोर्वृष्टिः क्लीबयोरपि दुर्दिनम् ॥

सुधांशु'''रता नाड्यां तत्रैव सकला यदि ।
जलैरेकार्णवा पृथ्वी समन्ताज्ज्ञायते क्षणात् ॥

**वनमाला ग्रन्थानुसारं सप्तनाडीचक्रस्वरूपम्--**

| | | |
|---|---|---|
| चण्डा | शनि | कृत्तिका च विशाखा च |
| वायु | सूर्य | मित्रमं यमभं तथा । |
| दहना | भौम | चण्डाभियामेतानि |
| सौम्या | गुरु | तदग्रे तु तदग्रगम ॥ |
| नीरा | शुक्र | कृ रो मृ आ पु पु श्ले |
| जला | बुध | म पू उ ह चि स्वा वि |
| अमृता | चन्द्र | अ ज्ये मू पू उ अ श्र |
| | | ध श पू उ रे अ भ |

त्रयो वाऽप्यथ चत्वारः पंच वा खेचराः क्रमात् ।
एक-त्रि-सप्त-दिवसानलं वर्षति वारिदः ॥

एवं जलायामपि वासरार्द्धं दिनं तथा पञ्चदिनानि नीरम् ।
नीराभिधायां प्रहरं दिनार्द्धं दिनत्रयं वर्षति वारिवाहः ॥

अमृतादित्रयेऽप्येवं धृति (१८) न (१२) रसवासरान् ।
ग्रहाः सर्वे प्रयच्छन्ति विपुलं भुवि जीवनम् ॥

दिनत्रयं जलं खेटाः सौम्यायामेव सर्वतः ।
अनावृष्टिः निरामध्ये याम्येक्रूरा भवन्ति चेत ॥

एकत्र यदि चन्द्रारौ (कौं) भवेतां जीवसंयुतौ ।
तदैव महती वृष्टिः सर्वतो भुवि जायते ॥
एकत्र बुधशुक्रौ वा भवेतां गुरुसंयुतौ ।
तत्र चन्द्रसमायोगाज्जायते वृष्टिरुत्तमा ॥

**रुद्रयामलान्तर्गतस्वरोदयादुद्धृतं सप्तनाडीचक्रम्—**

वृष्टिसूचकस्य सप्तनाडीचक्रस्य वर्णनं रुद्रयामले स्वरोदयेऽपि कृतमास्त इति सरस्वती-भवन-पुस्तकालयस्य पाण्डुलिपिसंग्रहस्य "सप्तनाडीकं वर्षफणिचक्र" मिति-ग्रन्थाज्ज्ञायते । अत्रानेकत्र पाठोऽस्पष्टः सन्दिग्धश्च परं वनमालाग्रन्थे समुपलब्ध-स्यैतद्विषयकवर्णनस्य साहाय्येनार्थावगतिर्जायते । तथा हि—

[1]अथातः सम्प्रवक्ष्यामि यच्चक्रं सप्तनाडिकम् ।
येन विज्ञातमात्रेण वृष्टिं जानाति साधकः ॥
कृत्तिकादि लिखेद् भानि साभिजिच्चक्रमेण तु ।
सप्तनाडी व्यधस्तत्र कर्तव्यः पन्नगाकृतिः ॥

ताराचतुष्कभेदेन नाडिकैका प्रजायते ।
तासां नामान्यहं वक्ष्ये तथा चैव फलानि च ॥
कृत्तिका च विशाखा च मैत्राख्यं भरणी तथा ।
उर्ध्वाद्या सप्तनाडीषु चण्डनाड्यभिधा मता ॥
रोहिणी स्वातिज्येष्ठाश्विद्वितीया नाडिका मता ।
आदित्यप्रभवा नाडी वायुनाडी च सा मता ॥
सौम्यं चित्रा तथा मूलं पौष्णर्क्षं च चतुर्थकम् ।
तृतीयाऽङ्गारकानाडी दहनाख्या तथैव च ॥
रौद्रं हस्तं तथा पूर्वाषाढा भाद्रपदोत्तरा ।
चतुर्थी जीवनाडी स्यात् सौम्या नाडी प्रकीर्तिता ॥
पुनर्वसूत्तराफाल्गुन्युत्तराषाढतारकाः ।
पूर्वाभाद्रा च शुक्रा (क्ला) च पंचमी नीरनाडिका ॥

---

१. सप्तनाडीकं वर्षफणिचक्रम् । स० भ० पु० पाण्डुलिपि–संख्या ३५१७७

पुष्यर्क्षं फाल्गुनीपूर्वाऽभिजि (च्) छततारका ।
षष्ठी नाडी च विज्ञेया बुधाख्या जलनाडिका ॥
आश्लेषार्क्षं मघा कर्णधनिष्ठाभं तथैव च ।
अमृताख्या हि सा चद्रा सप्तमी सा रसातला ॥
मध्यमार्गे स्थिता सौम्या नाडी तस्याग्रपृष्ठतः ।
सौम्ययाम्यगतं ज्ञेयं नाडिकानां त्रिकं त्रिकम् ॥
क्रूरा याम्यगता नाड्यः सौम्या सौम्यदिगाश्रिताः ।
मध्यनाडी च मध्यस्था ग्रहरूपफलप्रदा ॥
एकनाडीगता द्व्याद्या ग्रहाः क्रूरा शुभा यदि ।
ततो नाडीफलं वाच्यं शुभं वा यदि वाऽशुभम् ॥
ग्रहाः कुर्युर्महावातं गता वाताख्यनाडिका (म्) ।
वायुनाडीगता वायुं दहन्यां दाहकास्तथा ॥
सौम्यनाडीगता मध्या नीरस्था मेघवाहकाः ।
जलायां वृष्टिदश्चन्द्रश्चन्द्रनाडीगतः शशी ॥
प्रावृट्काले फलं धत्ते स्वनाडीसंस्थितो ग्रहः ।
भूसुतः सर्वनाडीषु धत्ते नाडीभवं फलम् ॥
प्रावृट्काले समायाते रौद्रर्क्षे च गते रवौ ।
नाडीवेधसमायोगे जलयोगं वदाम्यहम् ॥
यत्र नाड्यांस्थितश्चन्द्रस्तत्रस्था खेचरा यदि ।
क्रूरसौम्यविमिश्राश्च तद्दिने वृष्टिरुत्तमा ॥
एकऋक्षसमायोगो जायते यदि खेचरैः ।
तत्र काले महावृष्टिर्यावत्तस्यांशके शशी ॥
केवलैः सौम्यपापैर्वा ग्रहैर्विद्धो यदा शशी ।
तद्दिने तु (च्) छपानीयं दुर्दिनं तु भवेद् ध्रुवम् ॥
यस्य ग्रहस्य नाडीस्थश्चन्द्रमास्तद्ग्रहेण चेत् ।
दृष्टो युक्तः करोत्यन्नं यदि क्षीणो न जायते ॥

पीयूषनाडिगश्चन्द्रस्तत्रखेटाः शुभाशुभाः ।
त्रिचतुः पञ्च पानीयं दिनान्येकत्रिसप्तकम् ॥
एवं जलाख्यनाडीस्थे चन्द्रे मिश्रग्रहान्विते ।
दिनार्धदिवसं पञ्चदिनानि जायते जलम् ॥
नीरनाडीस्थिते चन्द्रे तत्रस्थैः पूर्ववद् ग्रहैः ।
यामं दिनार्धकं त्रीणि दिनानि जायते जलम् ॥
अमृतादित्रये यत्र स्थिताः सर्वे हि खेचराः ।
तत्र वृष्टिः समा ज्ञेया स्थ (शस्य) र्करसवासरान् ॥
सौम्यनाडीगताः सर्वे वृष्टिदास्ते दिनत्रयम् ।
शेषनाड्यां महावाताः दुष्टवृष्टिप्रदा ग्रहा ॥
निर्जला जलदा नाडी भवेद् यदि शुभग्रहः ।
क्रूराधिकसमायोगे जलदापि च दाहदाः ॥

## रुद्रयामलगतस्वरोदयानुसारं सप्तनाडीचक्रस्वरूपम्—

| श | र | मं | गु | शु | बु | चं |
|---|---|---|---|---|---|---|
| चण्डा | वाता | दहना | सौम्या | नीरा | जला | अमृता |
| कृ | रो | मृ | आ | पु | पुः | आ |
| वि | स्वा | चि | ह | उ | पू | म |
| अ | ज्ये | मू | पू | उ | अ | श्र |
| भ | अ | रे | उ | पू | श | ध |

राशिनक्षत्रादयः खमण्डलेऽवस्थानविशेषं सूचयन्तीति पूर्वं वर्णितम् । इत्थं नक्षत्रविशेषे ग्रहविशेषस्थितिः, ग्रहविशेषाणां योगो वा खमण्डले ग्रहाणामवस्थानविशेषं स्थितिं सूचयति । अवस्थानविशेषे ग्रहाणां स्थित्या योगैर्वा भुवो वायुमण्डलस्य आर्द्रत्व-तापक्रमादयः प्रभाविता भवन्तीति पूर्वं वर्णितानां नक्षत्रचक्राश्रितानां वृष्टिज्ञानविधीनां वैज्ञानिकत्वं सुस्पष्टम् ।



# सद्योवृष्टिज्ञानम्

वृष्टिकाले अचिराज्जायमानाया वृष्टेर्लक्षणानि किञ्चत्कालात् प्रागेव दृश्यन्ते। ऋतुविज्ञानदृष्ट्या लक्षणानामेतेषां ज्ञानं परमावश्यकम्। विषयोऽयं प्राच्यानामपि दृष्टिमावर्जितवान्। विषयेऽस्मिन् प्राच्यैः प्रभूतं गवेषणं कृतम्। संस्कृतग्रन्थेषु वर्णितानि सद्योवृष्टिलक्षणानि समधीत्य ज्ञायते यत् किञ्चित्कालानन्तरं भाविन्या वृष्टेः पूर्वानुभवो यथा पशुपक्षिणां, भुवि निवसतां कीटसरीसृपादीनां, मत्स्यभेकादीनां जलचराणां प्राणिनां च भवति तथा मानवानां न भवति। प्राच्यैर्विद्वद्भिर्विषयस्यास्य गभीरमनुशीलनं विहितं, विविधप्राणिनां चेष्टाश्च समधीताः। यथा च पशुपक्षिकीटजलचरादीनां चेष्टाः सद्योभाविनीं वृष्टिं सूचयन्ति तस्य वर्णनं तैः स्वपर्यवेक्षणाधृतं कृतम्। लोकप्रपञ्चशून्ये सर्वथा प्रकृतिस्थे बालानां मनसि, आघातवातदुष्टे मानवशरीरे चापि यथा सद्योभाविन्या वृष्टेरनुभवो भवति तस्यापि सम्यगनुशीलनं प्राच्यैः कृतम्। वृक्षगुल्मलतादीनां चेष्टा अपि सद्योभाविनीं वृष्टिं सूचयन्ति; अतस्तासामपि चेष्टानामध्ययनं प्राच्यैः प्रसङ्गेऽस्मिन् कृतम्। एवंविधानां सद्योवृष्टिसूचकानां लक्षणानां वर्णनं प्राच्यग्रन्थेषूपलभ्यते। अत्र यानि हि वृष्टिकाले पशुपक्षिणां चेष्टितानि यानि च वृक्षलतादीनां चेष्टितानि, ये वा मानवशरीरगता विकारास्तेषां सर्वेषां कारणं क्वचिद् विशिष्टं वायुमण्डलीयं भूगर्भगतं वा तापमानं, क्वचिद् जलवाष्पाधिक्याद् वायुमण्डले विद्यमानं विशिष्टम् आर्द्रत्वं, क्वचिच्च भूतले प्रवर्तमानाभ्यो विविधरासायनिकक्रियाभ्यः समुद्गतो गन्धो भवति। गन्धस्पर्शादिभिः प्रेरिता जन्तवः, तापार्द्रत्वादिभिः प्रेरिता वृक्षलतादश्च वृष्टिकाले यानि विशिष्टानि चेष्टितानि कुर्वन्ति तेभ्यो यत् तापक्रमविशेषे, वायोरार्द्रत्वमानविशेषे वा वर्षणं भवति तस्य ज्ञानं सर्वथा वैज्ञानिकमेव। ये तु सद्योवृष्टिसूचकाः सूर्यचन्द्रयोः परिवेषादयः; इन्द्रचापादीनि आकाशलक्षणानि च तेषामपि समेषां कारणं वायुमण्डलीयमार्द्रत्वं तापमानं वा भवति। एतान्यपि वृष्टिलक्षणानि मानवैः यंत्रादिसाहाय्यं विनैव द्रष्टुमध्येतुञ्च शक्यन्ते। एतेषां वैज्ञानिकत्वम् ऋतुविज्ञानस्य भौतिकविवेचनावसरे वर्णितम्। इदं तु प्राच्यानां वैशिष्ट्यं यत्ते बहुमूल्यानां यंत्राणां स्थाने जन्तुवनस्पत्यादीनामेवोपयोगं कुर्वन्ति। इत्थं च व्ययं विनैव कार्यं सिध्यति। सम्प्रत्युदाहरणरूपेण कानिचित् सद्योवृष्टिलक्षणानि वर्ण्यन्ते। तथा हि—

## पराशरोक्तानि सद्योवृष्टिलक्षणानि—

महर्षिणा पराशरेण स्वीये कृषिशास्त्रग्रन्थे सद्योवृष्टिसूचकानां लक्षणानां वर्णनं कृतम्। तथा हि—

'जलस्थो जलहस्तो वा निकटेऽथ जलस्य वा ।
दृष्ट्वा पृच्छति वृष्ट्यर्थं वृष्टिः संजायतेऽचिरात् ॥
उत्तिष्ठन्त्यण्डमादाय यदा चैव पिपीलिकाः ।
भेकः शब्दायतेऽकस्मात् तदा वृष्टिर्भवेद् ध्रुवम् ॥
विडाला नकुलाः सर्पा ये चान्ये वा बिलेशयाः ।
धावन्ति शलभा मत्ताः सद्यो वृष्टिर्भवेद् ध्रुवम् ॥
कुर्वन्ति बालका मार्गे धूलिभिः सेतुबन्धनम् ।
मयूराश्चैव नृत्यन्ति सद्यो वृष्टिर्भवेद् ध्रुवम् ॥
आघातवातदुष्टानां नृणामङ्गे व्यथा यदि ।
वृक्षाग्रारोहणञ्चाहेः सद्योवर्षणलक्षणम् ॥
पक्षयोः शोषणं रौद्रे खगानामम्बुचारिणाम् ।
झिन्झीरवस्तथाऽऽकाशे सद्योवर्षणलक्षणम् ॥

अत्रैव पाठान्तरेऽधिकः पाठः समुपलभ्यते । अशोऽयं बहुशः खण्डितस्तथा हि—

यद्यूर्ध्वं कृकलासकास्तरुगताः पश्यन्ति गावो मुहः ।
दृष्ट्वार्कं यदि वा चरन्ति बहुशः संरौति भेकी यदि ।
संचारस्तु पिपीलिकाण्डविषयो................ ।
......क्षीणदीधितिः शिवदिशि क्षिप्रं तदा वर्षति ॥
शनौ कुजे गुरौ चैव परिवेषो यदा भवेत् ।
चतुर्थे पञ्चमे वाऽपि जलपूर्णा भवेन्मही ॥
यदि भवति कदाचित्कार्तिके नष्टचन्द्रे,
रविशनिकुजवारे स्वातिनक्षत्रयोगः ।
भवति बहु निपातः स्थावराणां नराणाम् ,
तरुविटपिपशूनां वारिणा वायुना वा ॥
प्रावृषि शीतकरो भृगुपुत्रात् सप्तमराशिगतः शुभदृष्टः ।
सूर्यसुतान्नवपंचमगो वा सप्तमगश्च जलागमनाय ॥ इति ॥

१. कृषि पराशरः । पृ० १७-१९ । श्लो० ६५–७० तथा टिप्पणी ॥

## जीवनाथवर्णितानि सद्योवृष्टिलक्षणानि--

जीवनाथेन प्राच्यानां महर्षीणां मतान्याश्रित्य विरचिते स्वीये वनमालाग्रन्थे सद्योवृष्टिलक्षणानि वर्णितानि। उक्तग्रन्थस्योपलब्धायां पाण्डुलिप्यां बहुशः पाठः खण्डितोऽस्पष्टश्च। तथा हि--

द्रव्यं जलार्द्रं सजलं घटं वा स्पृष्ट्वा जलासन्नगतस्तदानीम्।
प्रष्टाऽम्बुकामोन्मुख एव पृच्छत्यलं वेददम्बुरवेऽपि तोयम्॥

उदयाचलमागतो दिनेशः कनकाभोऽमलविद्रुमच्छविश्चेत्।
प्रतपन्किरणो न दुर्निरीक्ष्यो, द्रुतमम्भः पतति क्षितौ तदानीम्॥

दशदिशो विमला विरसं पयो, द्रवति वा लवणं किल यद्दिने।
तदिह गोनयाभमलं पयः पतति वायसकाण्डनिभं नभः॥

न वाति यदि मारुतो रविरुदेति चण्डद्युतिः।
द्रुतं भुवि झषावलिर्व्रजति रन्तुमम्भस्तटान्।
तदैव जलमागतं पयसि भेककोलाहलो,
वदेदिह समन्ततो बुधवरः पयोदागमे॥

लिखन्तो वसुधामुच्चैर्बिडालाः स्वनखैर्यदा।
सेतुबन्धाश्च रथ्यायां वाजिनो बालनिर्मिताः॥

लौहानां मलगन्धाश्च पर्वताः कज्जलोपमाः।
कन्दरा वाष्पसंरुद्धा भवन्तीह जलप्रदाः।
चरणायुधनेत्राभः परिवेषो यदा विधौ।
शुभवारे च वर्षर्त्तौ वृष्टिरायाति सर्वतः॥

उपघातमृते पिपीलिकानां महदण्डक्रमणं यदा तदाऽपि।
अहिरङ्घ्रिपमस्तकप्रचारि दिवसे वाऽथ भुजङ्गमन्यवायः॥
कपोतशुकलोचनप्रतिनिभः क्षपानायको-
ऽथवा मधुनिभो दिवि प्रतिविधुर्यदा राजते।
दिवा हरिहरिद्भवा क्षणरुचिस्तदा वारिदाः
सृजन्ति परितः क्षितौ नवजलागमं सत्वरम्॥

भुवो रजसि पक्षिणो यदि लुठन्ति तोयागमे,
नटन्ति च शिखण्डिनो दिवि लपति शब्दं पिकाः ।
लताऽपि गगनोमुखी कलितपुष्पगर्भा यदा,
तदा भुवि समन्ततो ददति वारि धाराधराः ॥
तित्तिरच्छदनिभं गगनं वा, पक्षिणोऽपि मुदिताः प्रलपन्ति ।
उद्गमास्तसमये सवितुश्चेद्, आदिगन्तमतुला जलवृष्टिः ॥
प्रतिभानुरिन्द्रधनुरेव यदा परिघोदयोऽपि तडितः परितः ।
परिवेषताम्बरपदे सजला दिनपोऽङ्गमास्तसमये वसुधा ॥
अमोघकिरणा भानोरस्ताचलकरा इव ।
उच्छ्रिता भूसमा मेघास्तदा जलमयी मही ॥

**नारदोक्तानि सद्योवृष्टिलक्षणानि—**

नारदीये मयूरचित्रकेऽपि सद्योवृष्टिलक्षणानि वर्णितानि सन्ति । अत्र पाठो बहुशोऽपूर्णः, परं पराशरादीनां कृतीनां साहाय्येन पाठस्य संशोधनं कर्तुं शक्यते । अनेकत्रोपलब्धात् पाठादस्पष्टानां स्थलानामर्थावगतिरपि जायते । तथा हि—

'प्रावृट्काले यदा सूर्यो मध्याह्ने दुःसहो भवेत् ।
तद्दिने वृष्टिदः प्रोक्तो भृशं स्वर्णसमप्रभः ॥
यदा जलं च विरसं ...... गोनेत्र-सन्निभः ?
दिशश्च विमलाः सर्वाः काकाण्डाभं यदा नभः ॥
न यदा वाति 'तपनः (पवनः) स्थलं ...... यदा ।
शब्दं कुर्वन्ति मण्डूकास्तदा स्याद् वृष्टिरुत्तमा ॥
नखैर्लिखन्ति मार्जाराः पृथिवीं यत्तदा भृशम् ।
लोहानां मलनिचयो विस्रगन्धो यदा भवेत् ॥
सेतुं कुर्वन्ति रथ्यायां शिशवो मलिना यदा ।
शुद्धाञ्जनाभा गिरयो वाष्पमुद्रितकन्दराः ॥
पिपीलिका यदाऽण्डानि गृहीत्वोच्चैः प्रयान्ति वै ।
सर्पा वृक्षं यदा यान्ति तदा बहुजलप्रदाः ॥

१. मयूरचित्रकम् । स० भ० पु० पाण्डुलिपि-संख्या ३४३३२ । पृ० १८ ॥

गावः सूर्यं निरीक्षन्ति कृकलासगणास्तथा ।
गृहान्नेच्छन्ति पशवो निर्गमं कुकुरास्तथा ॥
लताश्चोर्ध्वमुखाः सर्वाः स्नानं कुर्वन्ति पक्षिणः ।
पांशुभिश्च तृणाग्राणि सेवन्ते वै सरीसृपाः ॥
वि ......... पक्षाभं अलिपक्षनिभं तथा ।
तदा वृष्टिः समादेश्या निश्चितं दैवचिन्तकैः ।

ग्रन्थेऽस्मिन् समुपलब्धा प्रायः समग्राऽपि सामग्री कुत्रचिल्लिपिकृतत्रुटिवशात् कुत्रचित् पाठस्य खण्डितत्वाच्च संशोधनमर्हति । परमेतानि संशोधनानि प्रयोगात्मकं परीक्षणमाश्रित्यैव सन्तु चेत्तर्हि मन्ये ग्रन्थोऽयम् ऋतुविज्ञान-शास्त्रदृष्ट्या कृषिशास्त्रदृष्ट्या च महत्त्वावहः सिद्ध्येत् ।

## भैरवमते मेघस्वरूपात् सद्योवृष्टिज्ञानम्—

गुरुसंहिताग्रन्थे भैरवोक्तानि मेघस्वरूपमधिकृत्य सद्योवृष्टिलक्षणानि वर्णितानि । अत्र पाठो बहुत्र संशोधनार्हः; परं विषयस्त्ववबुध्यत एव । तथा हि—

[1]पूर्वस्यां यदि सन्ध्यायां मेघसञ्छादितं नभः ।
केचिदुष्ट्रसमा मेघाः केचित्कुञ्जरसन्निभाः ॥

उक्तश्लोकस्य तृतीयचरणे 'केचिदुष्ट्रस्तदृक्'-इत्यस्य स्थाने केचिदुष्ट्रसमा इति पाठः स्वीकृतः ।

केचिद् वै शूकरमुखाः केचिन्महिषसन्निभाः ।
केचिद् वै पर्वताकारा केचिद् वृषभसन्निभाः ॥
एतद्वर्णाश्च ये मेघा वर्षन्ते नात्र संशयः ।
पञ्चरात्रं भवेद् वृष्टिः सप्तरात्रं विधीयते ॥
उत्तरे यदि सन्ध्यायां दृश्यते घनमालिका ।
अम्बुदा गोमयाकारा दृश्यन्ते यदि पार्वति ॥
पश्चिमे चैव सन्ध्यायां जलदा गिरिसन्निभाः ।
वर्षते सप्तरात्रं वा त्रिरात्रं पञ्चरात्रकम ॥
द्रोणमेकं तु देवेशि वर्षन्ते नात्र संशयः ॥

---

१. गुरुसंहिता । स० भ० पु० पाण्डुलिपिसंख्या ३४७२५ । पृ० ४३-४४ ॥

दक्षिणे यदि मेघः स्यात् कोटिनादसमुद्भवः ।
वर्षते च त्रिरात्रेण त्रिरात्रं पञ्चरात्रकम् ॥
आग्नेय्यां यदि मेघाश्च जायन्ते वरवर्णिनि ।
रात्रौ प्रवर्षते मेघ इति भैरवमब्रवीत् ॥
ईशान्यां तु यदा मेघो जायते यदि पार्वति ।
वातवृष्टिं विजानीयात् प्रहरार्धे न संशयः ॥

अत्र तृतीयचरणे वालवृष्टिमित्यस्य स्थाने वातवृष्टिमिति पाठः स्वीकृतः ।

नैर्ऋत्ये च यदा भागे उत्पद्यन्ते घटाकुलाः ।
................................... ॥
वायव्ये तु यदा मेघा जायन्ते वरवर्णिनि ।
वातवृष्टिं विजानीयाद् रात्रौ स्यात्प्रहराद्दिने ॥

**रुद्रायामलोक्तानि सद्योवृष्टिसूचकानि मेघस्वरूपाणि—**

अयमेव विषयः कैश्चित् पाठान्तरैः सह मेघमालाग्रन्थेऽपि वर्णित उपलभ्यते । अत्र पाठो बहुशः संशोधनार्हः । तथा हि—

पूर्वस्यां दिशि सन्ध्यायां यदा मेघाकुलं नभः ।
कश्चिदुष्ट्रसमाकारः कश्चिद् हस्तिसमः प्रिये ॥
कश्चित् सिंहसमाकारः कश्चित्पर्वतसन्निभः ।
कश्चित्तु मकराकारः कश्चिन्मृगसमः प्रिये ॥
एवमेव यदा मेघः पञ्चरात्रं प्रवर्षति ।
विज्ञेयं सप्तरात्रं वा वृष्टिं वर्षति माधवः ॥
उत्तरेण तु सन्ध्यायां दृश्यते पर्वतमालिका ।
अम्बुदैः सदृशा मेघा यदा दृश्यन्ति पार्वति ॥
वर्षन्ति सप्तरात्रं वै इति भैरवभाषितम् ।
मकरैः सदृशो मेघो यदा देवि प्रयास्यति ॥
वर्षते च त्रिरात्रेण सप्तरात्रमथापि वा ।
आग्नेय्यां च यदा मेघो दृश्यते सुरवन्दिते ॥

रात्रौ वर्षति जीमूतो भैरवेणेति भाषितम् ।
ईशाने च यदा मेघो जायते कृष्णपर्वतः ।
वर्षन्ति चार्धरात्रेण सन्ध्याकालेऽथवा प्रिये ॥
वायव्यां तु यदा मेघो जायते वरवर्णिनि ।
वातवृष्टिं विजानीयाद् रात्रौ स्यात्प्रहराद्दिने ॥

**सद्योवृष्ट्यादिज्ञानाय सन्ध्याकालिकपर्यवेक्षणानि—**

अहोरात्र्योः सन्धिकालः सन्ध्या इति कथ्यते । सायं सूर्यस्यार्धास्तमनकालादारभ्य आकाशे नक्षत्रदर्शनं यावत्; तथैव प्रातः नक्षत्राणामदर्शनकालादारभ्य सूर्योदयं यावत् यः कालः स सन्ध्या । भारतीयपद्धतौ वृष्ट्यादिज्ञानार्थमस्मिन् काले बहुशः पर्यवेक्षणानि क्रियन्ते । प्राच्यैः सद्योवृष्टिज्ञानार्थमस्मिन् काले कृतानि कानिचित्पर्यवेक्षणानि निदर्शनरूपेण तावदत्रोपन्यस्यन्ते । तथा हि—

[1]सन्ध्याकाले स्निग्धा दण्डतडिन्मत्स्यपरिघपरिवेषाः ।
सुरपतिचापैरावतरविकिरणाश्चाशुवृष्टिकराः ॥
विच्छिन्नविषमविध्वस्तविकृतकुटिलापसव्यपरिवृताः ।
तनुह्रस्वविकलकलुषाश्च विग्रहा वृष्टिदाः किरणाः ॥

शुक्लाः करा दिनकृतो दिवादिमध्यान्तगामिनः स्निग्धा ।
अव्युच्छिन्ना ऋजवो वृष्टिकरास्ते त्वमोघाख्याः ॥
कल्माषबभ्रुकपिला विचित्रमाञ्जिष्ठहरितशबलाभाः ।
त्रिदिवानुबन्धिनो वृष्टयेऽल्पभयदास्तु सप्ताहात् ॥
ताम्रा बलपतिमृत्युं पीतारुणसन्निभाश्च रुग्व्यसनम् ।
हरिताः पशुशस्यवधं धूमसवर्णा गवां नाशम् ॥

मञ्जिष्ठाभाः शस्त्राग्निसम्भ्रमं बभ्रवः पवनवृष्टिम् ।
भस्मसदृशास्त्ववृष्टिं तनुभावं शबलकल्माषाः ॥

दधिसदृशाभो नीलो भानुच्छादी खमध्यगोऽभ्रतरुः ।
पीतच्छुरिताश्च घना घनमूला भूरि वृष्टिकराः ॥

---

१. अत्रैव । श्लो० २४,२६ टीकायां भट्टोत्पलेनोद्धृतम् ॥

कुवलयवैडूर्याम्बुजकिञ्जल्काभा प्रभञ्जनोन्मुक्ता ।
सन्ध्या करोति वृष्टिं रविकिरणोद्भासिता सद्यः ॥
अशुभाकृतिघनगन्धर्वनगरनीहारधूमपांसुयुता ।
प्रावृषि करोत्यवग्रहमन्यर्त्तौ शक्रकोपकराः ॥

**गर्गोक्तानि सद्योवृष्ट्यादिज्ञानाय सन्ध्याकालिकपर्यवेक्षणानि—**

प्रसङ्गेऽस्मिन् महर्षिणा गर्गेण वर्णितं सन्ध्यारागविवेचनमपि तावद् द्रष्टव्यम् । तथा हि —

[1]वसन्ते मधुवर्णाभा अथवा रुधिरसन्निभा ।
ग्रीष्मे श्वेता रजोध्वस्ता पांसुवर्णा च शस्यते ॥
नीललोहितशुक्लाभा सन्ध्या वर्षासु वर्षिका ।
मञ्जिष्ठवर्णा शरदि पीयूषाभा च शस्यते ॥
हेमन्ते बभ्रुवर्णा च पिङ्गला चापि पूजिता ।
शिशिरे शोणवर्णा च सन्ध्या क्षेमसुखप्रदा ॥
स्निग्धप्रसन्ना विमला सप्रभा नाकुलाऽपि वा ।
सन्ध्या यथर्तुवर्णाभा शान्तद्विजमृगा शुभा ॥ इति ॥

**काश्यपोक्तानि सद्योवृष्ट्यादिज्ञानाय सन्ध्याकालिकपर्यवेक्षणानि—**

महर्षिणा काश्यपेनापि वर्णितं सन्ध्यायाः सामान्यस्वरूपं तावदत्रैव त्रिंशत्तम-श्लोकस्य व्याख्याने भट्टोत्पलेन समुद्धृतमुपलभ्यते । यथा हि—

[1]दिनरात्र्यन्तरं सन्ध्या सूर्यस्यार्द्धं प्रदृश्यते ।
यावच्च तावदारभ्य शुभा वाऽप्यशुभाऽपि वा ॥
नभोऽमलं शुभदिशः पद्मारुणसमप्रभाः ।
मारुतो वाति सुरभिः सुखदो मृदुशीतलः ॥
एषा सन्ध्या शुभा ज्ञेया विपरीताऽशुभा स्मृता ।
रूक्षा च सविकारार्का क्रव्यादखरनादिता ॥
स्निग्धा दण्डपरीवेषा सुरचापविभूषिता ।
क्षिप्रं वर्षप्रदा सन्ध्या जयारोग्यविवृद्धिदा ॥ इति ॥

---

१. अत्रैव । भट्टोत्पलोद्धृतम् ॥

## सूर्यपरिवेषात् सद्योवृष्टिज्ञानम्—

सन्ध्यायां सूर्यमण्डलस्य घनावरणस्य परिवेश्चापि वृष्टिफलमत्रैव वर्णितमुपलभ्यते। तथा हि—

[1]सितसितान्तघनावरणं रवेर्भवति वृष्टिकरं यदि सव्यतः।
यदि च वीरणगुल्मनिभैर्घनैर्दिवसभर्तुरदीप्तदिगुद्भवैः॥
उभयपार्श्वगतौ परिधी रवेः प्रचुरतोयकरौ वपुषान्वितौ।
अथ समस्तककुप्परिचारिणः परिधयोऽस्ति कणोऽपि न वारिणः॥

## इन्द्रधनुषः सद्योवृष्टिज्ञानम्—

सद्योवृष्टिसूचकेष्वाकाशलक्षणेषु इन्द्रधनुरपि महत्त्वावहं वर्तते। अस्य भौतिकशास्त्रीयं विवेचनं प्रथमप्रकरणे कृतम्। सम्प्रति तस्य वृष्टिसूचकत्वं वर्ण्यते। तथा हि—

[2]अच्छिन्नमवनिगाढं द्युतिमत् स्निग्धं घनं विविधवर्णम्।
द्विरुदितमनुलोमं च प्रशस्तमम्भः प्रयच्छति च॥
वृष्टिं करोत्यवृष्ट्यां वृष्टिं वृष्ट्यां निवारयत्यैन्द्र्याम्।
पश्चात् सदैव वृष्टिं कुलिशभृतश्चापमाचष्टे॥

## गर्गोक्तमिन्द्रधनुषः सद्योवृष्टिज्ञानम्—

[3]पश्चिमे तु दिशो भागे भवतीन्द्रधनुर्यदि।
समेघगगनं स्निग्धं वैदूर्यविमलद्युति॥
विद्युच्च निर्मला भाति पूर्वे वायुर्यदाभवेत्।
सप्तरात्रं महावर्षं निर्दिशेद्दैवचिन्तकः॥ इति॥

## काश्यपोक्तमिन्द्रधनुषः सद्योवृष्टिज्ञानम् —

[4]अवृष्टौ वर्षणं कुर्यादैन्द्रीं दिशमुपाश्रितम्।
पश्चिमायां महद्वर्षं करोतीन्द्रधनुः सदा॥

---

१. अत्रैव। श्लो० २४-२६॥
२. बृहत्संहिता। इन्द्रायुधलक्षणाध्यायः। श्लो० ३ ६॥
३. अत्रैव तृतीयश्लोकटीकायां भट्टोत्पलेनोद्धृतं गर्गवचनम्॥
४. अत्रैव सप्तमश्लोक टीकायां भट्टोत्पलोद्धृतम्॥

स्निग्धवर्णैर्घनैः शुभैर्वारुण्यां दिशि दृश्यते ।
बहूदकं सुभिक्षं च शिवं शस्यप्रदं भवेत् ॥ इति ॥

**वृष्टिविचारग्रन्थे वर्णितमिन्द्रधनुषः सद्योवृष्टिज्ञानम्—**

तथैव वृष्टिविचारग्रन्थे इन्द्रधनुषः सद्योवृष्टिसूचकत्वं वर्णितम् । तथा हि—

[1]ऐन्द्र्यामिन्द्रधनुर्दृष्टमवृष्ट्यां वृष्टिकृद्भवेत् ।
वृष्ट्यामवृष्टिं कुरुते, प्रतीच्यां वृष्टिदं सदा ॥

**जीवनाथमते इन्द्रधनुषः सद्योवृष्टिज्ञानम्—**

वनमालाग्रन्थेऽपि इन्द्रचापपरिघादीनां सद्योवृष्टिसूचकत्वं वर्णितं दृश्यते । तथा हि—

[2]प्रतिभानुरिन्द्रधनुरेव यदा परिघोदयोऽपि तडितः परितः ।
परिवेषताम्बरपदे सजला दिनपोऽङ्गमास्तसमये वसुधा ॥

**तडिन्मत्स्यपरिवेषेन्द्रधनुरादिभ्यः सद्योवृष्टिज्ञानम्—**

गुरुसंहिताग्रन्थे इन्द्रधनुस्तडिन्मत्स्यपरिवेषादीनां सद्योवृष्टिसूचकत्वमुपवर्णितम् । तथा हि—

[3]सन्ध्याकाले स्निग्धा······तडिन्मत्स्यपरिवेषाः ।
सुरपतिचापेनावृतरविकिरणाश्चाशुवृष्टिकराः ॥
प्रभाते पश्चिमेन्द्रस्य धनुश्च यदि दृश्यते ।
वारुणे चैव नक्षत्रैः शीघ्रं वर्षति माधवः ॥

**प्रतिसूर्यकात् सद्योवृष्टिज्ञानम्—**

यथेन्द्रधनुस्तथैव प्रतिसूर्यकोऽप्यवस्थानविशेषे स्थितः सद्योभाविवायुवृष्ट्यादेः पूर्वसूचको भवति । विषयेऽस्मिन् प्राच्यानां पर्यवेक्षणानि संक्षेपतः प्रस्तूयन्ते । तथा हि—

---

१. वृष्टिविचारः । स० भ० पु० पाण्डुलिपिसंख्या ३४४६३ । पृ० २ । श्लो १६ ॥
२. वनमाला । स० भ० पु० पाण्डु० सं० ३५३६५ । पृ० २ श्लो० १२ ॥
३. गुरुसंहिता । स० भ० पु० पाण्डुलिपिसंख्या ३४७२५ । पृ० ३२ ॥ श्लो० ५१-५२ ॥

[1]दिवसकृतः प्रतिसूर्यो जलकृदुदग्दक्षिणे स्थितोऽनिलकृत् ।
उभयस्थः सलिलभयं नृपमुपरि निहन्त्यधो जनहा ॥

## विद्युदालोकात् सद्योवृष्ट्यादिज्ञानम्—

विद्युदालोकविषये प्रथमप्रकरणे भौतिकशास्त्रीया दृष्टिरुपवर्णिता । सम्प्रति मेघमालाग्रन्थे वर्णितं सद्योवृष्टिसूचकं विद्युल्लक्षणफलं संक्षेपतः प्रस्तूयते । अत्र भाषा बहुशः संशोधनार्हा । तथा हि—

[2]पूर्वे विद्युत्करामेघा आग्नेय्यां जलशोषिणी ।
दक्षिणे रौरवं घोरं नैर्ऋत्यां तापमादिशेत् ॥
सुभिक्षं पश्चिमेनैव वायव्यां सुखसम्पदा ।
उत्तरे वर्षते मेघ ईशान्यां विजयो भवेत् ॥

## प्रोक्तानां सद्योवृष्टिनिमित्तानां फलोपलब्धेरवधिः—

पूर्वोक्तानां वृष्टिलक्षणानां फलोपलब्धेरवधिविषयेऽपि प्राच्यैरनुसंहितम् । विषयोऽयं प्राच्यग्रन्थेषु वर्णित उपलभ्यते । तथा हि—

[3]प्राची तत्क्षणमेव नक्तमपरा सन्ध्या त्र्यहाद्वा फलम् ।
सप्ताहात्परिवेषरेणुपरिघाः कुर्वन्ति सद्यो न चेत् ॥
तद्वत् सूर्यकरेन्द्रकार्मुकतडित्प्रत्यर्कमेघानिला-
स्तस्मिन्नेव दिनेऽष्टमेऽथ विहगाः सप्ताहपाका मृगाः ॥

## प्रोक्तानां सद्योवृष्टिलक्षणानां प्रभावक्षेत्रम्—

अत्रोक्तानां तत्तल्लक्षणानां प्रभावस्य विस्तारक्षेत्रमप्यत्रैव कथितम् । तथा हि—

[4]एकं दीप्त्या योजनं भाति सन्ध्या विद्युद्भासा षट्प्रकाशीकरोति ।
पञ्चाब्दानां गर्जितं याति शब्दो नास्तीयत्ता काचिदुल्कानिपाते ॥

---

१. बृहत्संहिता । प्रतिसूर्यलक्षणाध्यायः । श्लो० ३ ॥
२. मेघमाला । स० भ० पु० पाण्डुलिपि संख्या ३७२०२ । पृ० ४८ । श्लो० २, ३ ॥
३. बृहत्संहिता । सन्ध्यालक्षणाध्यायः । श्लो० ३१ ॥
४. उक्तस्थले । श्लो० ३२-३३ ॥

प्रत्यर्कसंज्ञः परिधिस्तु तस्य त्रियोजनाभः परिघस्य पञ्च ।
षट्पञ्चदृश्यं परिवेषचक्रं दशामरेशस्य धनुर्विभाति ॥

**देवलमते सद्योवृष्टिलक्षणानां प्रभावक्षेत्रम्—**

अत्र देवलमतमपि सदृशमेव । तथा हि—[1]

सन्ध्या तु योजनं याति विद्युद्भासा षडेव हि ।
मेघशब्दस्तु पञ्चानां योजनानां फलप्रदः ॥
उल्का सर्वत्र फलदा शुभा वाऽप्यशुभाऽपि वा ॥ इति ॥

**लोकोक्तिषु सद्योवृष्टिलक्षणानि—**

अयं विषयो देशे क्षेत्रीयभाषाणां लोकोक्तिष्वपि दृश्यते । उदाहरणरूपेणात्र हिन्दीभाषायां प्रसिद्धाः सद्योवृष्टिज्ञानसम्बद्धा लोकोक्तय उद्ध्रियन्ते । तथा हि—

**घाघोक्तिषु सद्योवृष्टेः सुवृष्टेर्वा लक्षणानि—**[2]

नियर गुडासा ( रीवां कीट ) नियर पानी ॥
भूरा बादर पानी लावै ।
पुरब क बादर पच्छिम जाय ।
मोटी रोटी लेहु पकाय ॥
पूरब धनुही पच्छिम भान ।
घाघ कहैं बरखा नियरान ॥
उत्तर चमकै बीजुरी पूरब बहनो बाउ ।
घाघ कहैं सुन घाघिनी भीतर बरधा लाउ ॥
वायू ( वायव्य ) में जब बाय समाय ।
घाघ कहे जल कहाँ समाय ।
पुरवा में पछुवा बहै, हँसि के नारि पुरुष से कहै ।
ऊ बरसै ई करै भतार, घाघ कहे यह सगुन विचार ॥
खन पुरवैया खन पछियाव, खन खन बहै बबूरा बाव ।
जो बादर बादर मा जाय, घाघ कहै जल कहाँ समाय ॥

---

१. अत्रैव । ३२ तमश्लोकटीकायां । भट्टोत्पलोद्धृतं देवलवचनम् ॥
२. घाघ और भड्डरी की कहावतें । उक्त प्रकाशने पृ० ३६-४२, ५२, ५५ ॥

औवा बौवा बहै बतास, तब होवै बरखा कै आस ॥
चमकै पच्छिम उत्तर ओर, तब जान्यो पानी है जोर ॥
पहिला पवन पूरब से आवै, बरसै मेघ अन्न झरि लावै ॥
सांझे धनुष सबेरे पानी, कहै घाघ सुन पण्डित ज्ञानी ॥
अम्बाझोर चलै पुरवाई, तब जानौ बरखा नियराई ॥
साँझे धनुष सबेरे मोर, ये दोनों पानी के बोर ॥

**सद्योवृष्टिसम्बद्धाः भड्डुरोक्तयः —**[1]

बादर ऊपर बादर धावै, कह भड्डर जल आतुर आवै ।
पवन थक्यो तीतर लवै, गुरुहि (पुष्य) सुदेवै (बृहस्पति) नेह ।
कहत भड्डरी जोतिसी ता दिन बरसै मेह ॥
कलसे पानी गरम है, चिड़ियाँ न्हावैं धूर ।
अण्डा लै चींटी चढ़ैं तो बरखा भरपूर ॥
बोलै मोर महातुरी, खाटी होय जु छाछ ।
मेह मही पर परन को, जानौ काछै काछ ॥
सुक्करवारी बादरी रहै सनीचर छाय ।
तो यों भाखै भड्डरी बिन बरसे ना जाय ॥
पुरवा बादर पच्छिम जाय, वासे मेह अधिक बरसाय ॥

**वृष्टिविघातलक्षणानि--**

यथा भाविन्याः सद्योवृष्टेज्ञानार्थं प्राच्यै पर्यवेक्षणानि कृतानि तथैव भाविनो वृष्टिविघातस्यापि ज्ञानार्थम् । पूर्वं गृहनक्षत्रादीनामुदयास्तमनगतियोगाद्याश्रितानां, आकाशलक्षणसम्बद्धानां, जन्तुवनस्पतिचेष्टाद्याश्रितानां च वृष्टिनिमित्तानां वर्णन-प्रसङ्गे यथावसरं वृष्टिविघातनिमित्तानामपि वर्णनं कृतम् । सम्प्रति विषयस्यास्य संक्षिप्तं विवेचनमुपन्यस्यते । वृष्टिगर्भलक्षणानां विवेचनप्रसङ्गे यानि वृष्टिगर्भ-पोषकाणि लक्षणानि वर्णितानि तद्विपरीता स्थितिर्वृष्टिविघातं सूचयतीति पूर्वमेव कथितम् । तथैव वृक्षाणां विविधजन्तूनां च याश्चेष्टा भाविनीं वृष्टिं सूचयन्ति

---

१. अत्रैव । पृ० ७६, ८३, ८४, ६४ ॥

तासामभावस्तद्विपरीता वा चेष्टाः वृष्टि विघातमपि सूचयन्ति। ग्रहनक्षत्रादीनामवस्थानविशेषादपि भावी वृष्टिविघातोऽनुमीयते। तथा हि—

[1]ध्रुवे च वैष्णवे हस्ते मूले शक्रे चरन् कुजः।
सद्यः करोत्यंनावृष्टिं कृत्तिकासु मघासु च॥
कुजपृष्ठगतो भानुः समुद्रमपि शोषयेत्।
स एव विपरीतस्तु पर्वतानपि प्लावयेत्॥
सद्यो विकृन्तयेद् वृष्टिं चित्रामध्यगतो भृगुः।
अङ्गारको यदा सिंहे तदाऽङ्गारमयी मही।
स एव रविणा युक्तः समुद्रमपि शोषयेत्॥ इत्यादि॥

**लोकोक्तिषु वृष्टिविघातलक्षणानि—**

यथा आधुनिकभारतीयभाषासु सद्योवृष्टिसूचिका लोकोक्तयः प्रसिद्धाः सन्ति तथैव वृष्टिविघातसूचिका लोकोक्तयोऽपि दृश्यन्ते। तथा हि[2]—

दिन में गर्मी रात में ओस। कहै घाघ वर्षा सौ कोस॥
लगे अगस्त फूले बन कासा। अब छोड़ो बरखा की आसा।
जबै बहै हडहवा (पश्चिम-दक्षिण) कोन। तब बनजारा लादै लोन॥
बोली गोह फूली बनकास। अब नाहीं बरखा की आस॥
दूर गुडासा दूर पानी॥ इत्यादि॥



१. कृषिपराशरः पृ० २१ श्लो० ७५-७८॥
२. घाघ और भड्डरी की कहावतें॥

# तृतीयं प्रकरणम्

## वृष्टिगर्भपर्यवेक्षम्

### वृष्टिगर्भलक्षणानां पर्यवेक्षणम्—

ऋतुविज्ञानशास्त्रस्य भौतिकशास्त्रीयदृष्ट्या विवेचनप्रसङ्गे वृष्टिगर्भस्यापि वैज्ञानिकं विवेचनमुपन्यस्तम्। तत्रैव वृष्टिगर्भस्य विकासविघातयोर्द्योतकानां लक्षणानामपि संक्षिप्तः परिचयः प्रस्तुतः। प्राच्य-भारतीयासु ऋतुज्ञानविधिषु वृष्ट्यादिज्ञानाय वत्सरे वृष्टिगर्भाणां पर्यवेक्षणं परमावश्यकम्। वृष्टिगर्भाणां पर्यवेक्षणं विना भाविनां वृष्ट्यादीनां ऋतुपरिवर्तनानां प्रामाणिकं ज्ञानं न भवति। वृष्टिगर्भा हि सम्यग् धृता अपि विविधैरुत्पातैर्विनश्यन्ति। कदाचिदपुष्टा अपि वृष्टिगर्भाः कालान्तरेऽनुकूलम् ऋतुं प्राप्य सुपुष्टतां यान्ति। एतानि सर्वाण्यपि परिवर्तनानि काले काले जायमानैर्वृष्टिगर्भलक्षणैरध्येतुं शक्यन्ते। अयमेवाशयो वराहमिहिरेण स्वीये वृहत्संहिताग्रन्थे वर्णितः। तथा हि—

> 'दैवविदवहितचित्तो द्युनिशं यो गर्भलक्षणे भवति।
> तस्य मुनेरिव वाणी न भवति मिथ्याऽम्बुनिर्देशे॥'[1]

अतः सुष्पष्टं यद् भाविनां वृष्ट्यादीनां प्रामाणिकज्ञानाय समभवत्सरे वृष्टिगर्भलक्षणानां पर्यवेक्षणमवहितचेतसा कर्त्तव्यमेव। विषयोऽयमप्रकाशितेषु प्राचीनग्रन्थेषु वर्णितो दृश्यते। विषयेऽस्मिन् संस्कृतग्रन्थेषु विशेषतश्चाप्रकाशितानां ग्रन्थानां याः पाण्डुलिपयः उपलब्धास्तासु लिपिकर्तां त्रुटिवशाद् भाषा बहुशोऽशुद्धा विद्यते। यत्र कुत्रचिद् आशयोऽपि अस्पष्टः पर्यवेक्षणैः संशोधनमपेक्षते। पूर्वं वृष्टिगर्भविवेचनप्रसङ्गे स्पष्टीकृतं यत् सामान्यतश्चातुर्मास्यवृष्टेरनन्तरं नवनवा वृष्टिगर्भाः सम्भवन्ति। वृष्टिगर्भाधानकालस्य विवेचनप्रसङ्गे प्राक् कथितं यत् केषाञ्चिन्मते कार्तिकशुक्लान्तमतीत्य केषाञ्चिन्मते च मार्गशिरः सितपक्षप्रतिपत्प्रभृति नवा वृष्टिगर्भा धार्यन्ते। अतः कार्तिकमासादारभ्यैव वृष्टिगर्भलक्षणानां पर्यवेक्षणं प्रारभणीयम्। तथा हि—

### कार्तिके वृष्टिगर्भादीनां वृष्टिनिमित्तानां पर्यवेक्षणम्—

वृष्टिज्ञानार्थं कार्तिके मासि वृष्टिगर्भसम्बन्धीनि वक्ष्यमाणानि पर्यवेक्षणानि प्राचीनग्रन्थेषु वर्णितान्युपलभ्यन्ते। तथा हि—

---

१. वृहत्संहिता। गर्भलक्षणाध्यायः। श्लो० ३॥

**मेघमालाग्रन्थे वर्णितानि कार्तिकमासीयवृष्टिगर्भलक्षणानि—**

अस्य ग्रन्थस्य पाण्डुलिप्यामुपलब्धः पाठो बहुशः संशोधनार्हः ।

[1]मासि मासि कथं देवि कीदृशं गर्भलक्षणम् ।
किं वातं किं घनं युक्तं कस्य कालेन वर्षति ॥
शृणु देवि परं गुह्यं पूर्वोक्तं नारदं प्रति ।
कार्तिकादिषु मासेषु यादृशं वृष्टिलक्षणम् ॥
स्यात्कार्तिके पुष्पवती च मार्गे स्नानं मतं पौषतुषारवातम् ।
माघे तु नित्यं घनमण्डिता च स्यात्फाल्गुने वायुशुभान्वितं शुभम् ॥
चैत्रे किंचित्पयो हीष्टं वैशाखे पञ्चरूपिणाम् ।
ज्येष्ठे मासे तदा नूनं बहुघर्मान्वितं शुभम् ॥
आकाशे पञ्चवर्णानि श्वेतादेः पञ्चरूपिणाम् ।
मासाष्टकनिमित्तेन चतुष्टयमभीष्टदम् ॥
द्वादश्यां कार्तिके मासि शुक्ले या रजनी यदा ।
सकला निर्मलाऽतीव पुष्पबन्धो भवेत्तदा ॥
अथवा भरणी ऋक्षं यदा स्यात्पूर्णिमादिने ।
कुत्रचित्तु भवेद्वृष्टिः कुत्रचित्स्यादवर्षणम् ।
कार्तिकी पूर्णमासी चेत्पूर्णा कृत्तिकया युता ।
सर्वसस्यं समुत्पन्नं निर्वैरा धरणी भवेत् ॥
प्राजापत्यं भवेद् ऋक्षं ससमं पूर्णिमादिने ।
तदा स्यात्तु समा तापो दुर्भिक्षमसमंजसम् ॥
पुष्पबन्धं प्रवक्ष्यामि शृणु तत्त्वेन भामिनि ।
कार्तिक्यां पौर्णमास्यां तु रहस्यं कृत्तिका यदा ॥
पुष्पबन्धः समादिष्टः चतुर्मासेषु वर्षति ।
सुभिक्षं क्षेममारोग्यं सस्यनिष्पत्तिरेव च ॥

---

१. मेघमाला । स० भ० पु० पाण्डुलिपि संख्या १७१०२ । पृ० ३०-३१ । श्लो० १-१६ ॥

अर्धेन्दुराननने देवि याम्यर्क्षेण च संयुता ।
रोगं दीर्घमनावृष्टिः खण्डे खण्डे च वर्षणम् ॥
सन्तापो विविधाकारः सरोगा विविधास्तथा ।
राजानश्च तथा देवि युद्ध्यन्ते च परस्परम् ॥
अथवा रोहिणी ऋक्षं वर्तते तद्दिने प्रिये ।
द्विपदं चतुष्पदं देवि तथा भूतं विनश्यति ॥
अथाश्विनी च देवशि यदि स्यात्पूर्णिमादिने ।
मध्यमं जायते सस्यं मेघो वर्षति मध्यमः ॥
कार्तिके मार्गशीर्षे वा सङ्क्रान्तौ यदि वर्षति ।
मध्यमं जायते सस्यं सुभिक्षं पौषवर्षणैः ॥
दीपोत्सवदिने वारौ भौमार्को न शुभप्रदौ ।
संक्रान्तेऽर्घवृद्धिं देवि शुभमर्केण भौमगे ॥
गर्भिलं कार्तिके मासि चतुर्मासेषु वर्षति ।
सुभिक्षं जायते तत्र सस्यसम्पत्तिरुत्तमा ॥
सर्ववर्णस्तथा मेघो जायते च पृथक् पृथक् ।
कार्तिके चैव मासे तु ईदृशं गर्भलक्षम् ॥

**अत्रैव मेघवर्णवर्णनप्रसङ्गे**---

[1]कार्तिके शुक्ल नन्दायां पञ्चरूपाणि यो भवेत् ।
अभ्राणि श्वेतवर्णानि रक्तवर्णानि यो भवेत् ॥
पीतवर्णास्तु मेघा हि कृष्णवर्णश्च यो भवेत् ।
कांस्यवर्णो भवेद्यस्तु ताम्रवर्णस्तथा भवेत् ॥
पंच वर्णास्तु विज्ञेया दिव्यगर्भेषु शाम्भवि ।
प्रतिपदादिभिः पीत्वा कला पञ्चदशी तथा ॥
षोडशी तु कला चैव अमावास्या प्रकीर्तिता ।
गर्जितं कार्तिके मासि मासचत्वारि वर्षति ॥

---

१. अत्रैव । पृ० १, २ श्लो० १४–१८ ॥

कार्तिके मासि मेघस्य पुष्पाणां सम्भवो भवेत् ।
दुर्भिक्षं जायते यत्र कार्तिके मेघमुत्तमम् ॥

अत्रमेघमुत्तममित्यस्योत्तमावृष्टिरित्याशयो बोध्यः। भाषाऽत्र बहुशो व्याकरणनियमानुपेक्ष्य वर्तते ॥

## नारदमते कार्तिकमासीयवृष्टिगर्भलक्षणानि—

[१]कार्तिके मार्गशीर्षे वा सङ्क्रान्तौ वारिवर्षणम् ।
तदा समर्घता पौषे सस्यवृद्धिस्तु मध्यमा ॥
यदा कार्तिकमासे तु वारिदस्य च गर्जनम् ।
भवत्यन्नं समर्घत्वं सस्यसम्पत्तिरुत्तमा ॥
ऊर्ज्जस्य द्वादशी शुक्ला रजनी निर्मला यदा ।
पूर्णिमा कृत्तिका युक्ता तदा लोकाः सुखान्विता ॥
अथवा भरणी सर्वा कार्तिक्यां भवति ध्रुवम् ।
दुर्भिक्षं जायते घोरमक्षिरोगा भवन्ति हि ॥
तस्यामेवाश्विनीयोगः सस्यसम्पच्च मध्यमा ।
यदाऽयं रोहिणीयोगो जन्तवः क्लेशभागिनः ॥

## गुरुसंहितावर्णितानि कार्तिकमासीयवृष्टिगर्भलक्षणानि—

अयमेव विषयो गुरुसंहिताग्रन्थेऽपि यत्र कुत्रचित् पाठान्तरेण वर्णित उपलभ्यते। अत्रापि भाषा बहुशोऽशुद्धा, अनेकत्र विषयश्चाप्यस्पष्टः। तथा हि—

[२]गार्भिके कार्तिके मासि चतुर्मासेषु वर्षति ।
सुभिक्षं जायते तत्र शस्य-सम्पत्तिरुत्तमा ॥
अभ्राणि श्वेतवर्णानि पीतानि च भवन्ति हि ।
कृष्णवर्णास्तथा मेघा ताम्रवर्णाश्च सुन्दरि ॥
कामवर्णाः सन्ति केचिद्वर्णैः सिन्दूरसन्निभाः ।
दृश्यन्ते ईदृशा मेघा जायन्ते च पृथक् पृथक् ॥

---

१. मयूरचित्रकम् । स० भ० पु० पाण्डुलिपि सं० ३४३३२ । पृ० १३ ॥
२. गुरुसंहिता । स० भ० पु० पाण्डुलिपि सं० ३४७२५ । पृ० १-४ ॥

कार्तिकाख्ये च मासे स्यादीदृशं गर्भलक्षणम् ।
एवं देवि समाख्यातं मेघानामुपदर्शनम् ॥

अत्रैव वासरफलमपि श्लोकेनैकेन कथितं; परं कस्यां तिथौ वासरफलमिति निर्देशो न कृतः। कार्तिकस्यामायां दीपावलीपर्वणि वासरफलमेतद् भवितुमर्हतीति परीक्षणीयम्। कार्तिकस्य प्रथमदिवसे पूर्णिमायां वाऽपि फलमेतत् परीक्षणीयम।
अन्यच्चाप्यत्रैव--

गर्जिते कार्तिके मासि किंचिद् विद्युत्प्रदृश्यते ।
ताम्रवर्णास्तथा मेघाः शुभकालस्तदा भवेत् ॥
कार्तिके मार्गशीर्षे च संक्रमे यदि वर्षति ।
मध्यमं जायते वर्षं पौषे माघे सुभिक्षदम् ॥
दीपोत्सव-दिने वारौ भौमार्कौ न शुभावहौ ।

क्वचिद् भौमार्कावित्यस्य स्थाने भौमार्कीत्यपि पाठो लभ्यते तदेतत्परीक्षणमर्हति।

सङ्क्रातीनां च नैकत्यं शुभकार्यादिभिर्न हि ॥

अत्रैवान्यदपि--

पुष्पबन्धं प्रवक्ष्यामि शृणु तत्त्वेन भामिनि ।
कार्तिक्यां पौर्णमास्यां तु नक्षत्रं कृत्तिका यदि ॥
पुष्पबन्धः समादिष्टश्चतुर्मासेषु वर्षणम् ।
सुभिक्षं क्षेममारोग्यं शस्यसम्पत्तिरेव च ॥
अथवा तद्दिनं देवि याम्यर्क्षेण च संयुतम् ।
दीर्घरोगास्त्वनावृष्टिः खण्डे खण्डे च वर्षति ॥
अथाश्विनी च देवेशि यदि स्यात्पूर्णिमादिने ।
मध्यमं जायते शस्यं मेघा वर्षन्ति मध्यमम् ॥
अथवा रोहिणी ऋक्षं तद्दिने वर्तते प्रिये ।
द्विपदाश्चतुष्पदाश्चैव व्याकुलीभूतमानसाः ॥
पञ्चवर्णास्तथा मेघाः विद्युद् वृष्टिश्च गर्जितम् ।
द्वादश्यां कार्तिके मासि पुष्पहानिः स उच्यते ॥

---

१. उक्तस्थले ॥

२. उक्तस्थले ॥

कार्तिकादिषु मासेषु यदीन्दुग्रहणं भवेत् ।
तारकापतनं चैव तथोल्कापतनानि च ॥

भूमिकम्पोऽथ निर्घातः पतन्ति जलबिन्दवः ।
आकाशे दृश्यते सम्यक् परिवेषोऽर्कचन्द्रयोः ॥

वज्रेन्द्रचापपरिघाणां धूमकेतोश्च दर्शनम् ।
संग्रहः सर्व धान्यानां तदा यत्नेन कारयेत् ॥ इति ॥

**लोकोक्तिषु कार्तिकमासीयवृष्टिगर्भलक्षणानि—**

[1]कातिक सुदी एकादशी बादल बिजुली होय ।
तो असाढ़ में भड्डरी वर्षा चोखी होय ॥

कातिक सुदि पूनौ दिवस जो कृतिका रिख होय ।
तामे बादर बीजुरी जो संयोग सों होय ।

चार मास तौ वर्षा होसी । भली भांति यों भाखै जोसी ।
रोहिनी जो बरसै नहीं, बरस जेठ औ मूर ॥

एक बूंद स्वाती परै उपजै तीनौ तूर ।
सावन पछिवां भादौं पुरवा, आसिन बहै इसान ।

कातिक कन्ता सींक न डोलै, गाजै सबै किसान ॥
उतरा उत्तर दै गयो, हस्त गयो मुख मोरि ।
भली विचारी चित्तरा, परजा लेइ बहोरि ॥

अत्र घाघोक्तयः --

[2]जब वर्षा चित्रा में होय, सगरी खेती जावै खोय ।
चित्रा बरसे तीन जांयं, मोती मास उखार ॥
जब बरसै पुनर्वसु स्वाती, चरखा चलै न बोलै तांतो ॥
हथिया बरसै चित्रा मडराय, घर बैठे किसान सुख पाय ॥

---

१. घाघ और भड्डरी की कहावतें । उक्त प्रकाशने पृ० ७५, पद्य ८२–८४ ॥
२. अत्रैव पृ० ३३-३५, ४१, ६१, ६५, ६७ ॥

एक पानी जो बरसै स्वाती, पहिर किसानिन सोन क पाती ॥
भैंस जो जनमै पड़वा, बहू जो जनमै धी ।
सबै कुलच्छन जानिये कार्तिक बरसे मी ।
ऊख कनाई काहे से, स्वाती क पानी पाये से ॥



## मार्गशीर्षे वृष्टिगर्भादीनां वृष्टिनिमित्तानां पर्यवेक्षणम्—

❀

### मेघमालाग्रन्थे वर्णितानि मार्गशीर्षे वृष्टिगर्भलक्षणानि—

प्रथमं तावन्मेघमालाग्रन्थे वर्णितानि मार्गशीर्षे वृष्टिगर्भलक्षणान्युपन्यस्यन्ते—

[1]मार्गादिपञ्चमासेषु आदिपक्षे तिथिक्षयः ।
छत्रभङ्गश्च दुर्भिक्षं जायते राजविग्रहः ॥
मार्गशीर्षे महेशानि सप्तमी नवमी दिने ।
ईशानं दिशमाश्रित्य दृश्यते मेघमण्डलम् ॥

तोयं वर्षति पर्जन्यो ह्यथवा वातमादिशेत् ।
दशम्यामुत्तरे वातः सितायां यदि जायते ॥
मार्गशीर्षे ह्यहोरात्रं तदा स्नानमुदीरितम् ।
मार्गशीर्षस्य मासे तु नक्षत्रं पितृदैवतम् ॥

कृष्णपक्षे चतुर्थ्यां तु सविन्द्युमेघदर्शनम् ।
तदैवमृक्षमाषाढ़े जलपूर्णा मही भवेत् ॥
चतुर्थ्यां जलयोगे तु सुभिक्षं च समादिशेत् ।
रात्रौ दृष्ट्वा दिने वृष्टिर्दिने दृष्ट्वा भवेन्निशि ॥

---

१. मेघमाला । पृ० ३२-३३ । श्लो० १-१७ ॥

पुमांस्त्रीगर्भसंयोगो विद्युन्मेघस्तथैव च ।
ऋक्षे त्वाष्ट्र तथाष्टम्यां नवम्यां वायुदैवतम् ॥
सर्वतो दिशि दृश्येत विद्युदभ्रेण संयुता ।
तदृक्षे चैवमाषाढे जलपूर्णं महीतलम् ॥
सुभिक्षं सस्यनिष्पत्तिः वसुधा नन्दते प्रिये ।
चतुर्थी पञ्चमी षष्ठी आश्लेषा च मघा तथा ॥
तदा तु पूर्वाफाल्गुन्यां त्रिरात्रं वर्षते ध्रुवम् ।
अष्टमी नवमी चैत्र चित्रानक्षत्रसंयुते ॥
आषाढे शुक्लपक्षे तु अष्टम्यां चैव सुन्दरि ।
स्वातीनक्षत्रसंयुक्तं त्रिरात्रं वर्षते ध्रुवम् ॥
नवमी दशमी चैव एकादश्यां यदा भवेत् ।
चित्रास्वातीविशाखासु अमावास्यां प्रवर्षति ॥
सर्वर्क्षैस्तु संयुक्ता सर्वमारुतसंयुता ।
वर्षते तद्दिनेदेवि नात्र कार्या विचारणा ॥
आषाढ़े शुक्लपक्षे तु वारुणमृक्षसंयुतम् ।
नवमी दशमी चैव वर्षते नात्रसंशयः ॥
द्वादश्यां च त्रयोदश्यां चतुर्दश्यां तथैव च ।
अमावास्या च विज्ञेया सर्वनक्षत्रसंयुता ॥
अष्टमारुतसंयुक्तो मेघो विद्युत्समन्वितः ।
आषाढ़े शुक्लपक्षे तु वर्षते नात्र संशयः ॥
एवं देवि समायोगे मेघानां गर्भलक्षणम् ।
कृत्तिका मार्गशीर्षे स्यान्मयाऽऽख्यातं वरानने ॥

**गुरुसंहितावर्णितानि मार्गशीर्षे वृष्टिगर्भलक्षणानि—**

अयमेव विषयो यत्र तत्र पाठान्तरेण सह गुरुसंहिताग्रन्थेऽपि समुपलभ्यते । तथा हि—

[1]मार्गादिपञ्चमासेषु शुक्लपक्षे तिथिक्षयः ।
दुर्भिक्षं छत्रभङ्गो वा जायते राजविग्रहः ॥
मार्गशीर्षे यदा मासि सप्तमीनवमीदिने ।
ईशानादिसमाश्रित्य दृश्यते मेघमण्डलम् ॥

स्तोकं वर्षति पर्जन्योऽथवा वातमादिशेत् ।
दशम्यामुत्तरो वातः सितायां यदि जायते ॥
मार्गशीर्षे ह्यहोरात्रं तदा स्नानमुदाहृतम् ।
तस्मिन् ऋक्षे तदाऽऽषाढे जलपूर्णा मही भवेत् ॥

चतुर्थ्यां जलयोगे तु सुभिक्षं च समादिशेत् ।
रात्रौ दृष्ट्वा दिने वृष्टिर्दिने दृष्ट्वा भवेन्निशि ॥
पुंस्त्रीयुतेर्यथा गर्भो विद्युन्मेघयुतैस्तथा ।
चतुर्थीपञ्चमषीष्ठ्यः सार्पपैत्रभगैर्युताः ॥

तदाभ्रं विद्युदम्भो वा शुचौ तद्भेषु वर्षति ।
ऋक्षे त्वाष्ट्रे तथाऽष्टम्यां नवम्यां वायुदैवते ॥
सर्वतो दिशि दृश्येत विद्युन्मेघेन संयुता ।
तद्दक्षे च तदाऽऽषाढे जलपूर्णा मही भवेत् ॥

सुभिक्षं शस्यनिष्पत्तिः वसुधा नन्दति प्रिये ।
अष्टमी नवमी चैवचित्रानक्षत्रसंयुता ॥
आषाढ़े श्वेतपक्षे तु अष्टमी चैव सुन्दरि ।
स्वातीनक्षत्रसंयुक्ता त्रिरात्रं वर्षते ध्रुवम् ॥

नवमी दशमी चैव तिथिर्विष्णोर्यदा भवेत् ।
चित्रा-स्वाती-विशाखाभिर्युतो दर्शश्च वर्तते ॥
सर्वैर्ऋक्षैस्तु संयुक्तः सर्वमारुतसंयुतः ।
वर्षते तद्दिने किंचिद् विद्युदभ्रचयस्तथा ॥

---

१. गुरुसंहिता । स० भ० पु० पाण्डुलिपिसंख्या ३४७२५ । पृ० ४–६ ॥

आषाढस्य सिते पक्षे चित्रानिलद्विपैर्युता ।
नवमीदशमीशाः स्युस्तदाब्दो वर्षते ध्रुवम् ॥
द्वादशी त्रयोदशी च चतुर्दशी तथैव च ।
आमावास्या च विज्ञेया सर्वनक्षत्रसंयुता ॥
इष्टमारुतसंयुक्ता मेघबिन्दुसमन्विता ।

अत्रेष्टमारुतेत्यस्य स्थाने अष्टमारुतेति पाठोऽपि सम्भवति । अष्टदिग्गतो वायुरित्याशयः ।

आषाढे श्वेतपक्षेऽब्दो वर्षते नात्र संशयः ॥
एवं दिनर्क्षसंयोगे मेघानां गर्भलक्षणम् ।
कार्तिके मार्गशीर्षे च कथितं तव सुन्दरि ॥

**नारदोक्तानि मार्गशीर्षे वृष्टिगर्भलक्षणानि––**

[1]मार्गशीर्षस्य सप्तम्यां नवम्यामीशदिग्यदा ।
दृश्यते मेघसंछन्ना स्तोकं वर्षति वासवः ॥
मार्गे कृष्णचतुर्थ्यां तु चित्रर्क्षे मेघदर्शनम् ।
अथवा जलपातः स्यात्तदाऽऽषाढे च वर्षणम् ॥
मार्गकृष्णाष्टमी स्वातीचित्रायुक्ता यदा भवेत् ।
मेघाक्रान्तं नभस्तस्यां दृश्यते सर्वतस्तदा ॥
तस्मिन् ऋक्षे तदाऽऽषाढे जायते वृष्टिरुत्तमा ।
सर्वसस्ययुता पृथ्वी प्रजा नन्दन्ति सर्वशः ॥
चतुर्थी सार्पसंयुक्ता पंचमी पितृसंयुता ।
षष्ठी च मृगसंयुक्ता पंचमी पितृसंयुता ।
त्रिरात्रं महती वृष्टिराषाढे शुक्लपक्षके ॥
अष्टमी वाऽथ नवमी चित्रायुक्ता यदा भवेत् ।
वातर्क्षे चतथाऽऽषाढे मेघा वर्षन्ति नित्यशः ॥

---

१. मयूरचित्रकम् । पूर्वोक्तपाण्डुलिप्यां पृ० १४ । श्लो० ११७-१२४ ॥
२. संवत्सरफलम् । स० भ० पु० पाण्डुलिपिसंख्या ३४३६८ । पृ० १४ ॥

**संवत्सरफलग्रन्थे वर्णितानि मार्गशीर्षे वृष्टिगर्भलक्षणानि—**

[२]मार्गशीर्षादि पञ्चमासेषु शुक्लपक्षे तिथिक्षयः।
छत्रभङ्गः प्रजापीडा दुर्भिक्षं च समादिशेत् ॥

**लोकोक्तिषु मार्गशीर्षमासिकवृष्टिगर्भलक्षणानि—**

**भड्डरोक्तयः —**

[१]माघ महीना मांहि जो, जेष्ठा तपै न मूर।
तो इमि बोलै भड्डरी, उपजे सातौ तूर ॥

मार्ग बदी आठैं घटा, बिज्जु समेती जोइ।
तौ सावन बरसै भलो, साखि सवाई होइ ॥

मार्ग बदी आठ घन दरसै।
सो मग्घा भरि सावन बरसै ॥

रोहिनी जो बरसै नहीं, बरसै जेठ और मूर।
एक बूंद स्वाती पड़ै उपजै तीनो तूर ॥

अगहन द्वादश मेघ अखाड़ (आकाश)।
असाढ़ बरसै अछनाधार ॥

**घाघोक्तयः**

[२]धनि वह राजा धनि वह देश।
जहँवाँ बरसै अगहन सेस ( अन्तिम ) ॥

अगहन बरसै हून ( बेहद ), पूस दून।
माघ सवाई, फागुन गंवाई ॥



१. घाघ और भड्डरी की कहवतें। उक्तप्रकाशने।

२. अत्रैव ॥

## पौषे वृष्टिगर्भादीनां वृष्टिनिमित्तानां पर्यवेक्षणम्

❀

### पराशरकथितानि पौषे वृष्टिगर्भलक्षणानि—

प्रथमं तावत्पराशरोक्तानि पौषे वृष्टिगर्भलक्षणानि वर्ण्यन्ते । तथा हि—

[1]सार्द्धं दिनद्वयं मानं कृत्वा पौषादिना बुधः ।
गणयेन्मासिकीं वृष्टिमवृष्टिं वाऽनिलक्रमात् ॥
सौम्यवारुणयोर्वृष्टिरवृष्टिः पूर्वयाम्ययोः ।
निर्वाते वृष्टिहानिः स्यात् सङ्कुले सङ्कुलं जलम् ॥
एकैकं पञ्चदण्डेन मासस्य दिवसो मतः ।
पूर्वार्द्धे वासरी वृष्टिरुत्तरार्द्धे च नैशिकी ।
दत्वा दण्डे पताकां तु वातस्यानुक्रमेण च ।
विज्ञेया मासिकी वृष्टिः कृत्वा यत्नमहर्निशम् ॥
धूलीभिरेव धवलीकृतमन्तरिक्षं, विद्युच्छटाछुरितवारुणदिग्विभागम् ।
पौषे यदा भवति मासि सिते च पक्षे तोयेन तत्र सकला प्लवते धरित्री ।
पौषे मासि यदा वृष्टिः कुज्झटिर्वा यदा भवेत् ।
तदादौ सप्तमे मासि तां तिथिं प्लाव्यते मही ॥

अत्र सप्तमो मासः गर्भविपाककाल इति ज्ञेयम् । तथा हि पौषे वृष्टिः कुज्झटिर्वा वृष्टिगर्भधारणं सूचयति ।

यदा पौषे सिते पक्षे नभो मेघावृतं भवेत् ।
तोयावृता धरित्री च भवेत्संवत्सरे तदा ॥
मीनवृश्चिकयोर्मध्ये यदि वर्षति वासवः ।
तदादौ सप्तमे मासि तत्तिथौ प्लवते मही ॥

### नारदोक्तानि पौषे वृष्टिगर्भलक्षणानि—

नारदीये मयूरचित्रकेऽपि विषयस्यास्य विवेचनं कृतमास्ते; परमत्रलिपिकारकृता बह्वयोऽशुद्धयः सन्ति । तथा हि—

---

१. कृषिपराशरः । पृ० ८-९ श्लो० ३०-३७ ॥

[1]पौषस्य पञ्चमी कृष्णा भौमवारेण संयुता ।
तस्यां मेघाः प्रवर्षन्ति तदा धान्याकुला मही ॥
पौषे कृष्णे च सप्तम्यां पौष-मासे महानिशि ।
यदा मेघाश्च वर्षन्ति तदा प्रावृषि तोयदाः ॥
शुक्ला त्रयोदशी पौषे मन्द-शुक्र-कुजैर्युता ।
यदा भवत्यवृष्टिः स्यात्कार्यो गोधूमसङ्ग्रहः ॥
पौषे शुक्लचतुर्थ्यां तु विद्युद्दर्शनमुत्तमम् ।
तदा विद्युद्घनाच्छन्नं दृष्टमिन्द्रधनुस्तथा ॥
पौषमासे पूर्वभाद्रे विशेषेण निरीक्षयेत् ।
परिवेषो गर्जनं वा विद्युद् वारिदवर्षणम् ॥
यदि तत्र प्रजायन्ते तदा वृष्टिरनुत्तमा ।
धनुर्विद्युद्घनो मत्स्यो यद्येकमपि नो भवेत् ॥
पौषे मासि, तदा वाच्यं वर्षाकालेष्ववर्षणम् ॥
पौषमासे वारुणर्क्षे पूर्वभाद्रे शुक्लपक्षे पञ्चम्यां हिमवर्षणम् ॥
यदा स्यान्महती वृष्टिस्तदा प्रावृषि निर्दिशेत् ।
पौषस्य सप्तमी शुक्ला रेवतीसंयुता तथा ।
अष्टम्यामश्विनीयोगो नवम्यां भरणी यदा ॥
एवंविधेषु योगेषु सविद्युद्घनवर्षणम् ।
तदा स्यान्महती वृष्टिर्वर्षाकाले न संशयः ॥
एकादश्यां यदा विद्युद् रोहिण्यां जलवर्षणम् ।
पौषे यदा तदा वृष्टिः प्रावृषि स्यान्महर्घता ॥
पौर्णमास्यां द्वितीयायां पौषे विद्युत्प्रदृश्यते ।
तदा स्यादन्ननिष्पत्तिः मेघच्छन्ने तथाम्बरे ॥

---

१. नारदीयं मयूरचित्रकम् । वा० सं० वि०, स० भ० पु० पा० सं० ३४३३२ । पृ० ३०-३७ ॥

अस्य मासस्य सङ्क्रान्तिः................ ।
रौद्रमारभ्य वातान्तं तदा वर्षति वासवः ॥

धनराशिगते सूर्ये मूलमारभ्य चिन्तयेद् ।
गर्भाधानं ततो वृष्टिर्विंष्टिमासे हि सार्धके ॥

मूलर्क्षे हि यदा गर्भो भवत्यार्द्रा च वर्षति ।
पूर्वाषाढे तथाऽऽदित्यमुत्तरायां तदा गुरुः ॥

श्रवणे सार्पभं चैव पूर्वाषाढेऽर्यमा खलु ।
वारुणे भाग्यभं चैव पूर्वाषाढेऽर्यमा खलु ॥

हस्तो वर्षत्युत्तरायां रेवत्यां वार्द्धिकस्तथा ।
एतद् गर्भसमासेन मयोक्तं चिन्तयेत्सुधीः ॥

तुरगर्क्षे गते भानौ यदि मेघः प्रवर्षति ।
मूलोद्भवं तथा गर्भं नादेश्यं दैवचिन्तकैः ॥

भरण्यादिस्थिते भानौ यस्मिन् मेघः प्रवर्षति ।
तस्मिंस्तस्मिंस्तु ऋक्षे गर्भनाशं वदेत् बुधः ॥

रौद्रर्क्षे संस्थिते भानौ जलं वर्षति वारिदः ।
पुष्टिर्भवति गर्भाणां प्रोक्तानां नात्र संशयः ॥

पौषस्य पञ्चदश्यां वै विधोर्याम्योत्तरे तडित् ।
दृश्यते वियदाच्छन्नं नभो वृष्टिः सदा भवेत् ॥

पौषे स्वात्यां च सप्तम्यां यदा स्याद् वारिवर्षणम् ।
मेघाच्छन्नं नभो वापि तदा सस्याकुला धरा ॥

कुद्रत्तांशुत्रितिथिषु पौषे गर्भः प्रजायते ।
तदा सुभिक्षमारोग्यं श्रावण्यां वारिवर्षणम् ॥

पौषस्य कृष्णसप्तम्यां नभो विमलतारकम् ।
स्वात्यां तुषारपातः स्यात् श्रावणे तत्र वर्षणम् ॥
मेघच्छन्नं नभो वाऽपि तदा सस्याकुला धरा ॥

पौषस्य कृष्णसप्तम्यां नभो विमलतारकम् ।
स्वात्यां तुषारपातः स्यात् श्रावणे तत्र वर्षणम् ॥
पौषमासस्य ……… सप्तम्यां वारिवर्षणम् ।
प्रावृट्काले तदा वृष्टिर्घर्मः स्याद् वारिवर्षणम् ॥
शुक्लायां यदि सप्तम्यां घनैराच्छादितं नभः ।
तदा तु श्रावणे मासि सप्तम्यां वृष्टिरुत्तमा ॥

## मेघमालाग्रन्थे वर्णितानि पौषमासिकवृष्टिगर्भलक्षणानि—

तथैव मेघमालाग्रन्थेऽपि विषयोऽयं विस्तरेण वर्णितो लभ्यते। अत्रापि भाषा बहुशोऽशुद्धा संशोधनार्हा च। तथा हि—

[1]पौषे शुक्लचतुर्थ्यां तु सविद्युन्मेघमुत्तमम् ।
अभ्रच्छन्नं नभः श्रेष्ठं मत्स्यमैन्द्रधनुस्तथा ॥
अहोरात्रं प्रयत्नेन अहोरात्रे निरीक्षयेत् ।
परिवेषं गर्जितं वा पतिता जलबिन्दवः ॥
सर्वेषामेव चिह्नानां विद्युद्दर्शनमुत्तमम् ।
कृष्णपक्षे तथाऽऽषाढे अमोघं वर्षति प्रिये ॥
विद्युन्मेघधनुर्मत्स्यो यद्येकमपि नो भवेत् ।
न ऋक्षं वर्षते तत्र न काले वर्षते तदा ॥
अनेन ज्ञायते सर्वं वर्षणं वाऽप्यवर्षणम् ।
एतच्च परमं गुह्यं गर्भाधानस्य लक्षणम् ॥
विद्युत्संयोगजं चिह्नं न देयं यस्य कस्यचित् ।
पौषमासे शुक्लपक्षे शततारर्क्षगे पुनः ॥
पञ्चमी अजपादेन. अभ्रमारुतसंयुता ।
विद्युन्मेघसमायुक्ता वर्षा चैव प्रजायते ॥

---

१. मेघमाला। सरस्वतीभवन-पुस्तकालयपाण्डुलिपिसंख्या ३७२०२ पृ० ३२-३५। श्लो० २-४८

आषाढे कृष्णपक्षे तु चतुर्थ्यां वर्षते ध्रुवम् ।
द्रोणसंख्या च विज्ञेया सप्तरात्र-प्रवर्षणे ॥
धनुराशिस्थिते सूर्ये मूलाद्या गर्भधारणम् ।
गर्भाद्वा च ध्रुवं वृष्टिः पञ्चोनेविंशतिर्दिने ॥
दिनसंख्या वरारोहे वर्षते नात्र संशयः ।
गोपितं सर्वशास्त्रेषु मया चात्र प्रकाशितम् ।
मूले च वर्षते आर्द्रा पूर्वाषाढे पुनर्वसुः ।
उत्तरायां तथा पुष्यं श्रवणं पितृदैवतम् ॥
रेवती त्वाष्ट्रभं देवि भिदं पुंसां वरानने ।
वर्षते च चतुर्मासे सुभिक्षं सर्वदा भवेत् ॥
पौषमासे तु देवेशि कृष्णपक्षे च सप्तमी ।
सर्वलक्षणसंयुक्ता अष्टमारुतसंभवा ॥
आषाढे शुक्लपक्षे तु वर्षते नात्र संशयः ।
अभ्रैर्या वेष्टिताऽऽकाशे भूमिवर्तिश्च पूरिता ॥
अहोरात्रप्रयुक्तेन पञ्चवर्णस्तु जायते ।
दिव्यगर्भे तु विज्ञेया श्रावणे शुक्लसप्तमी ॥
चित्रा-स्वाती विशाखा च पराह्णे जलसंयुताः ।
ऐरावतो नाम मेघो ह्यष्टमी-नवमीयुतः ॥
वर्षते नात्र सन्देहो सप्तरात्रं वरानने ।
त्रयोदश्यां चतुर्दश्याममावास्यां च सुन्दरि ॥
वर्षते च त्रिरात्रेण विद्युन्मेघसमन्वितम् ।
श्रावणे पूर्णमास्यां तु श्रवणश्चैव वर्षति ॥
द्रोणसंख्यां विजानीयात् प्राह श्रुतरवः स्वयम् ।
पौषे पुष्यस्तु पूर्णायां श्रावणे श्रवणस्तथा ॥
पौर्णमास्यां प्रवर्षन्ति सिते पक्षे न संशयः ।
पौषस्य शुक्लपक्षे तु शतभिषर्क्षमेव च ॥

अभ्रच्छन्नं तथाऽऽकाशमष्टमारुतसंयुतम् ।
श्रावणे कृष्णपक्षे तु पूर्वाभाद्रपदस्तथा ॥
मध्याह्ने जलसम्भूते वर्षते च दिनद्वयम् ।
पौषे तु पुष्यसंयुक्ता श्रावणे श्रवणं तथा ॥
श्रावणे पुष्यमावास्या पूर्वाह्ने जलमादिशेत् ॥
निष्पत्तिः सर्वधान्यानां प्रजा च निरुपद्रवा ।
पौषस्य शुक्लपक्षे तु सर्वध्यानेन चिन्तयेत् ॥
सप्तमी रेवतीयुक्ताऽष्टम्यां चाश्विनी भामिनि ।
नवमी भरणीयुक्ता पातविद्युद्विनिर्दिशेत् ॥
हिमं तु जायते तत्र एवं गर्भसमुद्भवम् ।
एकादश्यां तथा देवि पूर्णिमायां तथैव च ।
आषाढस्य त्वमावास्यां प्रभूतं जलमादिशेत् ॥
विद्युत्स्फुरति तत्वेन गर्जन्ती प्राणनाशिनी ।
एवं विज्ञायते देवि मेघानां वृष्टिलक्षणम् ॥
एकादशी तथा ज्ञेया सहिमा विद्युता युता ।
सजलो रोहिणीयोगस्तदाऽऽदेश्यो विचक्षणैः ॥
द्वितीया पूर्णिमा चैव सहिता विद्युता युता ।
कालनिष्पत्तिरादेश्या मेघाच्छन्नं तथाम्बरम् ॥

अत्र पूर्वश्लोके पूर्वार्द्धे सहितेत्यस्य स्थाने सहिमेति पाठः समीचीनतरः प्रतिभाति ।

प्रथमे श्रावणे मासि पक्षे द्रोणं समादिशेत् ।
गवां पयश्च बाहुल्यं वत्सानां जायते प्रिये ॥
पौषे मूल-हिरण्यान्ते चन्द्रचारिण.साभ्रकाः ।
आर्द्रादौ च विशाखान्ते रविमानेन वर्षति ॥
पौषस्य पूर्णमास्यां तु चन्द्रमा विचरिष्यति ।
उत्तरे दक्षिणे चैव यदा विद्युत्प्रदृश्यते ॥
पौषकृष्णनवम्यां तु स्वातीयोगे जलं भवेत् ।
अभ्रच्छन्नो यदाऽऽकाशो महावृष्टिस्तदा भवेत् ॥

आषाढस्य त्वमावास्यां जलयोगो भविष्यति ।
सुभिक्षं क्षेममारोग्यं जायते नात्र संशयः ॥
अभ्राणि यदि पूर्वं वा जलं वाऽपि पतेद् भुवि ।
अभ्रच्छन्नं जलं स्वल्पं जलं पतति वर्षति ॥

पौषस्य कृष्णसप्तम्यामभ्रेण वेष्टितं नभः ।
अष्टमारुतसंयुक्तं दिव्यगर्भः प्रजायते ॥
श्रावणे शुक्लपक्षे च स्वाति-ऋक्षेण सप्तमी ।
ध्रुवं वर्षति पर्जन्य एतत्सर्वं वरानने ॥

अष्टमी नवमी चैव दशमी च प्रवर्षति ।
एवं नक्षत्रसंयोगे श्रावणे वृष्टिरुत्तमा ॥
त्रयोदश्यां चतुर्दश्याममावास्यां च सुन्दरि ।
गर्जितं च त्रिरात्रेण विद्युन्मेघसमन्वितम् ॥

श्रावणे पूर्णमास्यां तु श्रावणेषु च वर्षति ।
द्रोणसंज्ञो भवेन्मेघः सुभिक्षं जायते तदा ।
ऐन्द्री विद्युदमावास्यां दर्शनं वा हिमस्य च ।
अभ्रच्छन्नं नभो वापि सजलं यदि जायते ।

श्रावणे शुक्लसप्तम्यां स्वातीयोगे जलं भवेत् ।
निष्पत्तिः सर्वसस्यानां प्रजा च निरुपद्रवा ॥
पौषस्य कृष्णसप्तम्यां निरभ्रं चेन्नभस्तलम् ।
सहिमः स्वातियोगश्च ईशाने विद्युतस्तु च ॥
श्रावणी पूर्णमास्यां तु श्रवणे जलसम्भवः ।
सुभिक्षं च समादेश्यं तस्मिन् वर्षे न संशयः ॥
अमावास्यान्ते पौषस्य शनिसूर्यमहीसुताः ।
संग्रहेत् सर्वधान्यानि लाभस्तु द्विगुणो भवेत् ॥
शुष्यते सागरजलं नदी सहसरोवरम् ।
छत्रभङ्गो भवेन्नूनं जनानां मरणं भवेत् ॥

## गुरुसंहिताग्रन्थे वर्णितानि पौषे वृष्टिगर्भलक्षणानि—

गुरुसंहिताग्रन्थेऽपि विषयस्यास्य विशदं विवेचनं समुपलभ्यते। अत्रापि भाषा बहुशः संशोधनार्हा। तथा हि—

[1]गर्जते वर्षते पौषे विद्युद् वायुश्च शोभनः।
अतिवृष्टिं विजानीयाद् धान्यं याति महर्घताम्॥
पौषे च करकावृष्टिर्हिमं पतति वर्षति।
विद्युद्दर्शनमभ्रं च शुभं गर्भस्य लक्षणम्॥
पौषे भाद्रपदे माघे शुक्लपक्षे तिथिक्षयः।
यत्संख्ये जायते चाह्नि तत्संख्ये दौःस्थ्यविग्रहः॥

पौषशुक्लचतुर्थ्यां तु विद्युद्दर्शनमुत्तमम्।
कृष्णपक्षे तदाऽऽषाढे वारिदो वर्षति प्रिये॥
विद्युन्मेघो धनुर्मत्स्यो यद्येकमपि नो भवेत्।
न ऋक्षं वर्षते तच्च न काले वर्षते तदा॥
अनेन ज्ञायते सर्वं वर्षणं चाप्यवर्षणम्।
एतद् वै परमं गुह्यं गर्भाधानस्य लक्षणम्॥

पौषमासे श्वेतपक्षे शतभिषग् ऋक्षमेव च।
पञ्चमी त्वजपादेन मेघमारुतसंयुता॥
विद्युन्मेघसमायुक्ता गर्भश्चैव प्रजायते।
आषाढे कृष्णपक्षे तु चतुर्थ्यां वर्षति ध्रुवम्॥
द्रोणसंज्ञस्तु विज्ञेयः सप्तरात्रं प्रवर्षति।
पौषे तुषारपातः स्यात् पञ्चम्यां पिण्डसिद्धये॥
शुक्लायां यत्नतो वीक्ष्यमेत्तत्तोयार्थिभिः पुनः।
पौषे तु सप्तमी शुक्ला चाष्टमी नवमी तथा।
सप्तमी रेवती युक्ता चाष्टमी दास्रसंयुता॥
नवमी याम्यसंयुक्ता विद्युद्वाताम्बुसंयुता॥

१. गुरुसंहिता। स० भ० पु० पाण्डुलिपिसंख्या ३४७२५। पृ० ६-१२॥

हिमं वा जायते तत्र इति गर्भसमुद्भवः ।
शुक्ले गर्भश्च निष्पन्नः कृष्णे चैव प्रवर्षति ॥

एकादश्यां तथा ज्ञेयं पौर्णमास्यां तथैव च ।
शुचौ कृष्णाशिवे दर्शे प्रभूतं जलमादिशेत् ॥

विद्युत्स्फुरति तत्त्वेन गर्जति प्राणनाशिनी ।
एवं विज्ञायते देवि मेघानां चैव लक्षणम् ॥

अत्रैव मेघमालाग्रन्थस्यापि कश्चनांशः समुद्धृतो विद्यते, परमत्र बहूनि पाठान्तराणि सन्ति । तथा हि—

एकादशी तथा ज्ञेया सहिता विद्युता युता ।
सजलो रोहिणी योगस्तदादेश्यो विचक्षणैः ॥
पूर्णमासी द्वितीया च सहिमा विद्युता युता ।
कालनिष्पत्तिरादेश्या मेघाच्छन्ने तथाम्बरे ॥

आषाढस्य त्वमायां वै प्रभूतं जलमादिशेत् ।
निष्पत्तिः सर्वशस्यानां प्रजाश्च निरुपद्रवाः ॥
गावो घटोध्न्यः सर्वत्र सर्वञ्च नन्दते प्रिये ।
प्रथमे श्रावणस्यापि पक्षे वर्षणमादिशेत् ॥
नागदेवद्वितीयायां किञ्चित्सर्पभयं भवेत् ।
लोकाः सर्वत्र पीड्यन्ते नाना नश्यन्ति पीडिताः ॥
रविमन्दारवारेषु यदि सङ्क्रमते रविः ।
तस्मिन् मासि भयं विद्याद् दुर्भिक्षावृष्टितस्करैः ॥

मेषसङ्क्रान्तिकालस्तु नवस्वपि दिनेष्वपि ।
यद्यभ्रवातौ विद्युत् स्यात् तदार्द्रादौ च वर्षति ॥
यद् वाऽत्र नवयामेषु वाताभ्रादि शुभं भवेत् ।
यस्यां दिशि च सम्पूर्णं तद्दिनेष्वखिलं जलम् ॥

पौषे मूलाद् भरण्यन्तं चन्द्रमानेन साभ्रके ।
तदार्द्रादिविशाखान्त रविमानेन वर्षति ॥

धनुराशिस्थिते देवि मूलादेर्गर्भधारणम् ।
गर्भाधानाद् ध्रुवं वृष्टिः पञ्चोनैकशते दिने ॥

अत्र "पञ्चोनैकशते दिने-इत्यस्य" पञ्चोने द्विशततमे दिने इत्याशयो भवितुमर्हति, गर्भविपाककालस्य सार्द्धषण्मासेति वर्णनात् ।

दिनसंख्या वरारोहे वर्षते नात्र संशयः ।
मूले प्रवर्षते चार्द्रा जलदेवे पुनर्वसुः ॥

विश्वभे च तदा पुष्यं श्रवणे सार्पदैवतम् ।
धनिष्ठायां मघा ज्ञेया वारुणे भगभं तथा ॥

अजपादे यमाख्यं स्याद् अहिर्बुध्न्येऽर्कभं तथा ।
रेवत्यां त्वाष्ट्रमादेश्यमेतत्संख्यं प्रवर्षति ॥

याम्यादि सार्पदेवान्तं क्रमेण वर्षति प्रिये ।
पूर्वाषाढादि पौष्णान्तं गर्भश्चैव विनश्यति ॥

रेवती जलनाशाय यदि न वर्षति कृत्तिका ।
भरणी तोयनाशाय यदि न वर्षति कृत्तिका ॥

एवं क्रमेण विज्ञेयं वृष्टिलक्षणमुत्तमैः ॥

पञ्चमे पञ्चमे स्थाने गर्भो पतति नान्यथा ।
आर्द्रा प्रवर्षते देवि गर्जिते वा प्रचण्डतः ॥

सर्वे गर्भाश्च तत्रैव वर्षन्ते पुंस्त्रिसंयुताः ।
आर्द्रा पुनर्वसुः पुष्यो सार्पं चैव मघा तथा ॥

पञ्चभिर्गलितैः ऋक्षैश्छिद्रं वर्षति माधवः ।
पौर्णमास्यां यदा पौषे चन्द्रः पुष्यं समाश्रितः ॥

उत्तरे दक्षिणे चैव यदि विद्युत्प्रदृश्यते ।
अभ्रच्छन्नं नभो वापि महावृष्टिं समादिशेत् ॥

श्रावणान्तश्च दर्शे वै जलयोगो भविष्यति ।
पौषस्य कृष्णसप्तम्यां जलयोगे जलं भवेत् ॥

सुभिक्षं क्षेममारोग्यं जायते नात्र संशयः ।
अभ्राणि यदि दृश्यन्ते जलं वा पतते यदि ॥

अभ्रच्छन्ने जलं स्वल्पं जलं पतति वर्षति ।
पौषस्य कृष्णसप्तम्यामभ्रैरावेष्टितं नभः ॥

अष्टम्याञ्च नवम्याञ्च दशम्याञ्च तथैव च ।
................विद्युदभ्रादिकं भवेत् ॥

श्रावणे शुक्लपक्षे तु स्वातियोगे तु सप्तमी ।
ध्रुवं वर्षति पर्जन्यः एतत्सर्वं वरानने ॥

पौषस्य कृष्णसप्तम्यां निरभ्रं चेन्नभस्तलम् ।
सहिमः स्वातियोगश्चेदैशानी विद्युदेव वा ॥

श्रावणे शक्लसप्तम्यां स्वातियोगे जलं भवेत् ।
निष्पत्तिः सर्वसस्यानां प्रजा च निरुपद्रवा ॥

एवमृक्षैस्तु संयोगो जायते वरवर्णिनि ।
त्रयोदश्यां चतुर्दश्याममायां चैव सुन्दरि ॥

गर्जते तु त्रिरात्रे सा विद्युन्मेघैः समन्विता ।
श्रावणस्य सिते पक्षे विश्वभूताविधौ तिथौ ॥

पूर्णमास्यां तथाऽवश्यं वर्षत्यब्दे न संशयः ।
द्रोणसंज्ञो भवेन्मेघः सुभिक्षं जायते तथा ॥

पौषामायामिन्द्रभागे विद्युतो दर्शनं भवेत् ।
अभ्रच्छन्नं नभो वापि जलं वा यदि जायते ॥

श्रावणे पूर्णिमायाञ्च श्रवणे जलसंयुते ।
सुभिक्षं च समादेश्यं तस्मिन् वर्षे न संशयः ॥

आषाढः प्रथमे पादे द्वितीये श्रावणस्तथा ।
तृतीये भाद्रपच्चैव चतुर्थे चाश्विनं तथा ।
इति पादक्रमेणैव चातुर्मास्यं प्रकल्पितम् ॥

**जीवनाथवर्णितानि पौषे वृष्टिगर्भलक्षणानि —**

[1]मूलादितो भरण्यन्तं पौषे गर्भधरा दिवि ।
अर्कचारेण वर्षन्ति रौद्रादि दशतारकाः ॥

**लोकोक्तिषु पौषमासिकवृष्टिगर्भलक्षणानि —**

[2]पूस अंधारी सप्तमी, जो पानी नहिं देइ ।
तौ अद्रा बरसे सही, जल थल एक करेइ ॥
पूस अंधारी सप्तमी, बिन जल बादल जोय ।
सावन सुदि पूनौ दिवस, वर्षा अवसहिं होय ॥
पौष बदी दशमी दिवस, बादल चमके बीजु ।
तौ बरसे भर भादवौं, साधो खेलो तीज ॥
पूस अंधारी तेरसै, चहुँ दिशि बादर होय ।
सावन पूनो मावसै, जलधर, प्रतिहीं जोय ॥
पूस अमावस मूल कौं, सरसै चारौ वाय ।
निहचै बांधौ झोंपड़ी वर्षा होय सेवाय ॥
सोम शुक्र सुरगुरु दिवस पौष अमावस होय ।
घर घर बजे बधावड़ा दुखी न दीखै कोय ॥
पूस मास दशमी अँधियारी ।
बदली घोर होय अधिकारी ॥
सावन बदि दशमी के दिवसै ।
भरै मेघ चारो दिशि बरसै ॥
पूस उजेली सत्तमी अष्टमी नवमी गाज ।
मेघ होय तो जानिये अब शुभ होइहैं काज ॥
रोहिनि जो बरसे नहीं बरसे ज्येष्ठा मूर ।
एक बूंद स्वाती परे उपजे तीनो तूर ॥

---

१. वनमाला । सं० भ० पु० पाण्डुलिपिसं० ३५३९५ । पृ० ६ । श्लो० १ ॥
२. घाघ और भड्डरी की कहावतें पृ०७६ । ५-१०, पृ० ८२ । ४५, पृ० ८४ । ५८ ॥

सर्व तपै जो रोहिणी सर्व तपै जो मूर ।
परिवा तपै जो जेठ की उपजै सातौ तूर ॥

अत्र घाघोक्तयः —

'माघ पूस जो दखिना चलै ।
तो सावन के लच्छन भले ॥
पानी बरसे आधे पूस ।
आधा गेहूँ आधा भूस ॥
जब बरसेगा उत्तरा, नाज न खावै कुत्तरा ॥
पूस में दूनों माघ सवाई ।
फागुन बरसे घर से जाई ॥

—०❀०—

## माघे वृष्टिगर्भादीनां वृष्टिनिमित्तानां पर्यवेक्षणम्

**पराशरोक्तानि माघमासीयवृष्टिगर्भलक्षणानि —**

प्रथमं तावत् महर्षिपराशरोक्तानि माघमासीयवृष्टिगर्भलक्षणानि द्रष्टव्यानि । तथा हि —

'माघस्यासितसप्तम्यां वृष्टिर्वा मेघदर्शनम् ।
तदा संवत्सरो धन्यः सर्वशस्यफलप्रदः ॥

अत्र प्रथमचरणे माघस्य सितसप्तम्यामिति पाठान्तरम् तन्निराकरणमपेक्षते ।

माघस्य सित सप्तम्यां तथैव फाल्गुनस्य च ।
चैत्रे शुक्लतृतीयायां वैशाखे प्रथमेऽहनि ॥
एतासु चण्डवातो वा तडिद् वृष्टिरथाऽपि वा ।
तदा स्याच्छोभना प्रावृड् भवेच्छस्यवती मही ॥

---

१. घाघ और भड्डरी की कहावतें । श्रीकृष्णशुक्ल विशारद सम्पादिते २००५ विक्रमाब्दप्रकाशने पृ० ३४,३५, ३६उक्ति संख्या १४३,१४८,१५२,१८० ॥

१. कृषिपराशरः । पृ० ९–१० । श्लो० ३८–४२ ॥

धनुर्मकरकुम्भेषु यदा वर्षति वासवः ।
तदादिसप्तमे मासि वारिपूर्णा भवेन्मही ॥
सप्तम्यां स्वातियोगे यदि पतति जलं माघ पक्षेऽन्धकारे,
वायुर्वा चण्डवेगः सजलजलधरो गर्जितो वासवो वा ।
विद्युन्मालाऽऽकुलं वा यदि भवति नभो नष्टचन्द्रार्कतारं,
तावद् वर्षन्ति मेघाः प्लुतधरणितले यावदाकार्तिकान्तम् ॥
माघे मासि निरन्तरं यदि भवेत् प्रालेयतोयागमो,
वाता वान्ति च फाल्गुने जलधरैश्चित्रे च छन्नं नभः ।
वैशाखे करकाः पतन्ति सततं ज्येष्ठे प्रचण्डातपस्
तावद् वर्षति वासवो रविरसौ यावत्तुलायां व्रजेत् ॥

**नारदोक्तानि माघमासीयवृष्टिगर्भलक्षणानि —**

[1]हिमं न पतितं माघे ज्येष्ठे मूलं न वर्षति ।
नार्द्रायां पतितं वारि कालो दुष्टस्तदा मतः ॥
माघमासे च सङ्क्रान्तौ यदा वर्षति वारिदः ।
तदा पृथ्वी तु सस्याढ्या धेनवो बहुदुग्धदाः ॥
द्वितीया मेघसञ्छन्ना धनधान्यविवर्द्धिका ॥
पञ्चमी मेघसंयुक्ता यदा जलविवर्जिता ।
तदा भाद्रपदे मासि स्वल्पा वृष्टिस्तु जायते ॥
आदित्योदयवेलायां यदा स्यादष्टमी तिथिः ।
तदा रौद्रगते सूर्ये श्रावणे च न वर्षति ॥

श्लोकस्य द्वितीयचरणे प्रसङ्गात् कृष्णपक्षस्याष्टमीति प्रतीयते ।

नवम्यां चन्द्रबिम्बे चेत्परिवेषस्तु जायते ॥
तदाऽऽषाढे महावृष्टिः सर्वधान्यमहर्घता ॥
माघस्य नवमी कृष्णा दशम्येकादशी यदा ।
विद्युद्वातसमायुक्ता तदा बहुजलप्रदा ॥

---

१. नारदीये मयूरचित्रके । वाराणसीस्थे स० भ० पु० सङ्ग्रहे पा० सं० ३४३३२ पृ० १६, १७ ॥

कृष्णायां वा त्रयोदश्यां चतुर्दश्यामथापि वा ।
पूर्वस्यां चोत्थिता मेघास्तदाऽऽषाढे च वर्षणम् ॥
पञ्चमी कृष्णपक्षस्य माघमासस्य षष्ठिका ।
सप्तमी शुक्रमन्देन्दुयुक्ता सस्यद्धिदा मता ॥
अमावास्या यदा छन्ना तदा भाद्रे जलं भवेत् ।
माघस्य शुक्लसप्तम्यां यदि स्याद् वारिवर्षणम् ।
सविद्युन्मेघसंयुक्ता तदा पृथ्वी जलाप्लुता ॥

**अत्रैवान्यदपि —**

[1]सप्तम्यां माघमासे च माघवे प्रथमेऽहनि ।
वान्ति वाताश्च शुभादास्तदा प्रावृषि वर्षणम् ॥

**तथा च —**

[2]सप्तम्यां माघमासे यदि पतति हिमं स्वातिनक्षत्रयोगे ।
चन्द्रार्कौ रश्मिहीनौ जलधरसहितौ वाति वातः प्रचण्डः ॥
विद्युद्युक्तं नभो वा यदि भवति तदा सर्वसस्यैरुपेता ।
पृथ्वी स्याद्वारिपूर्णा मुदितजनपदा सर्वलोकैश्च युक्ता ॥

**मेघमालाग्रन्थे वर्णितानि माघमासिकवृष्टिगर्भलक्षणानि —**

[3]वर्षते माघमासस्य सङ्क्रान्तिर्जायते यदा ।
बहुक्षीरघृता गावो बहुसस्या वसुन्धरा ॥
माघादिदिवसे वारो बुधो भवति चेत्तदा ।
मासत्रयं समर्घं वाऽथवा वर्षा विनश्यति ॥
बुधस्य प्रथमो वारो यदि माघस्य जायते ।
ततः प्रभृतिभिर्मासैर्महर्घं राजविग्रहम् ॥

---

१. अत्रैव पृ० ८ । श्लो० १८ ॥

२. तत्रैव पृ० ११ । श्लो० ७५ ॥

३. मेघमाला । स० भ० पु० पाण्डुलिपि संख्या ३७२०२ । पृ० ३५–३७ । श्लो० १–४४ ॥

प्रतिपदि सर्वमासेषु बुधो दुर्भिक्षकारकः ।
ज्येष्ठे मासे तथा नूनं परं वर्षा विनाशकृत् ॥
न माघे पतितं शीतं ज्येष्ठा नैर्ऋतिवृष्टिकृत् ।
तद्रात्र्यां पतितं तोयं दुष्टकालस्तदा भवेत् ॥

माघे शुक्ले यमाश्विन्यां मेघयुक् सस्यजायते ।
अथवा मेघहीनस्य सस्यानां धारयेत्··· (सु) धी ॥
पौषे भाद्रपदे माघे शुक्लपक्षे तिथिक्षयः ।
यत्संख्ये जायते चाह्नि तत्संख्ये देशविग्रहः ॥

पञ्चार्काः पञ्चभौमाश्च पञ्च सूर्यसुतास्तथा ।
एकस्मिन्नेव मासे तु तदा रौरवमादिशेत् ॥
गुरुं चन्द्रं विहायान्ये वाराः पञ्च भवन्तिचेत् ।
एकस्मिन्नेव मासे तु दुर्भिक्षं राजविग्रहः ॥
पूर्वं शन्यादिभिर्ये च उक्तं सस्यफलं शृणु ।
भ्रामयन्ति कुलाले च चक्रे कृत्वा तु मेदिनीम ॥
माघ-फाल्गुन-चैत्रेषु वैशाखज्येष्ठमासयोः ।
स्वातियोगस्तदा विंशद्दिनानि जायते फलम् ॥

पराह्णे जलसम्पूर्णं वर्षते घटिकाद्वयम् ।
दशम्यां च सितायोगे स्वातियोगेन संयुतम् ॥
अष्टमी नवमी देवि वर्षते च समुच्चयम् ।
अमावास्यां महेशानि वारिदो यदि दृश्यते ॥
पौर्णमास्यां भाद्रपदे पूर्णमेघः प्रवर्षति ।
माघस्य प्रतिपद्देवि सवाता मेघगर्जिता ॥
यदा भवेत्तदा ग्राह्यं तैलं सुगन्धिभिर्युतम् ।
द्वितीयायां घनैर्युक्तं मेघच्छन्नं नभस्थलम् ॥
सविद्युज्जायते यत्र तत्र धान्यमहर्घता ।
तृतीया मेघसंयुक्ता निर्जला यदि गर्जति ॥

गोधूमांस्तत्र गृह्णीयाद् यवांश्चैव विशेषतः ।
सर्वेषु चैव मासेषु ऋक्षवृद्धिः सुभिक्षकृत् ॥
चतुर्थी मेघसंयुक्ता बिन्दुभिर्जलसम्भवा ।
नारिकेलानि पत्राणि महर्घाणि भवन्ति हि ॥
पञ्चमी मेघ संयुक्ता यदि बिन्दुविवर्जिता ।
उदकं पवन-संयुक्तं भाद्रपदे न वर्षति ॥
षष्ठी सबिन्दुका शेषा निरभ्रा निर्जला दिशः ।
कार्पासं सङ्ग्रहेत्तत्र लाभो भवति पुष्कलः ॥
सप्तम्यां सोमवारः स्यान्माघे पक्षे सिते यदा ।
दुर्भिक्षं जायते रौद्रं विग्रहोऽपि हि भूभुजाम् ॥
सप्तम्यां सोमवारेण यदि गच्छेद् घनस्य च ।
घोराघोरास्तथा मेघा राजबिन्दव एव च ॥
अष्टम्यां यदि पश्यन्ति आदित्यमुद[illegible]ङ्गतम् ।
न वर्षति तदाऽऽर्द्रायां श्रावणाद्ये तथा प्रिये ॥
यदा च कुरुते देवि नवम्यां चन्द्रमण्डलम् ।
आषाढे पूर्णवृष्टिः स्याद् धान्यं लोके समर्घता ॥
माघस्य शुक्लसप्तम्यां सावधानैरहर्निशम् ।
वीक्षणीयं प्रयत्नेन कालनिश्चयकारणम् ॥
अहोरात्रं भवेत् साभ्रं वारुणी विद्युता सह ।
ऐन्द्री वा तथा कौबेरः शर्वरीषु दिवाऽपि वा ॥
महासुभिक्षकं देवि तद्वर्षे निरुपद्रवम् ।
भवन्ति चेति चिन्हानि मयाऽऽख्यातं शृणु प्रिये ॥
शुक्लपक्षस्य सप्तम्यां यन्माघे वर्षते घनः ।
दुर्दिनं च यदा पश्येत् वर्षाकालस्तदा शुभः ॥
माघशुक्लस्य सप्तम्यां मेघैश्छन्नं यदाऽम्बरम् ।
तत्प्रदेशे सुवृष्टिः स्यात् सुभिक्षं तत्र निर्दिशेत् ॥

पूर्णिमायाममावास्यां संलग्नस्तारकाक्षयः ।
महर्घं तत्र पूर्वार्द्धे मासमध्येऽपि जायते ॥
सप्तम्यां स्वातियोगेषु हिमं पतति चेद्यदि ।
अन्धकारे माघमासे वायुर्वा चण्डवेगतः ॥
सप्तम्यां स्वातियोगे यदि पतति जलं माघमासेऽन्धकारे ।
वायुर्वा चण्डवेगो सजलजलधरो वर्षते वाऽपि नूनम् ॥
विद्युन्मालाकुलं वा तदपि हि च भवेत् नष्टचन्द्रार्कतारम् ।
विज्ञेया प्रावृडेषा मुदितजनपदा सर्वसस्यैरुपेता ॥
माघफाल्गुनमासेषु चैत्रवैशाखयोस्तथा ।
स्वातीयोगं विजानीयादाषाढेषु विशेषतः ॥
माघस्य नवमी कृष्णा मूलर्क्षेण च संयुता ।
विद्युन्मेघोधनुर्मत्स्यमभ्रैर्वा वेष्टितं नभः ॥
मासि भाद्रपदे देवि वर्षते नवमी दिने ।
द्रोणसंज्ञो भवेन्मेघो मयाऽऽख्यातं शृणु प्रिये ॥
माघस्य नवमी कृष्णा दशम्येकादशी तथा ।
सवाता विद्युता युक्ता कथयन्ति जलं बहु ॥
सप्तमी माघमासस्याथवा कृष्णत्रयोदशी ।
चतुर्दश्यां तथा देवि पूर्वस्यां दिशिसंस्थिताः ॥
बहूदककरा मेघास्त्वाषाढे सप्तरात्रिकम् ।
अमावास्यातिथौ धिष्ण्यं यदा स्यात्स्वाति कार्तिके ॥
नूनं घनान्वितं देवि वर्षा तत्र भविष्यति ।
माघमासे त्वमावास्यामभ्रच्छन्नं यदा भवेत् ॥
हिमं सवातसंयुक्तमहोरात्रं भविष्यति ।
अष्ट वा पञ्च वर्षाणां दिव्यगर्भसमुद्भवम् ।
तदा भाद्रपदे मासे पूर्णिमायां प्रवर्षति ॥
माघस्य कथितं देवि यादृशं गर्भलक्षणम् ।

अत्रानेके अंशा अस्पष्टत्वान्नोद्धृता । अंशानामेतेषां संशोधनं परमावश्यकम् ।

## गुरुसंहितोक्तानि माघे वृष्टिगर्भलक्षणानि—

गुरुसंहिताग्रन्थेऽपि विषयोऽयं विस्तरेण वर्णित उपलभ्यते । तथाहि—

माघमासे तु सङ्क्रान्तौ वर्षते माधवो यदि ।
बहुक्षीरप्रदा गावो बहुशस्या वसुन्धरा ॥
न माघे पतितं शीतं ज्येष्ठे मूलं च वृष्टिकृत् ।
नाद्रायां पतितं तोयं दुष्टकालस्तदा मतः ॥
माघस्य शुक्लसप्तम्यामभ्रं वा जलबिन्दवः ।
अस्तमनं नैव दृश्येत हिमं चैव न जायते ।
चत्वारो वर्षते मासान् सार्धमासेन संयुतान् ।
तृतीया मेघसंयुक्ता यदि विन्दुविवर्जिता ।
यदि वातेन संयुक्ता नभस्यब्दो न वर्षति ॥
सप्तमी सोमवारेण यदि गच्छेन्नराधिप ।
घोराधारास्तदा मेघा राजविप्लव एव च ॥

### पाठान्तरे स्पष्टतरम् —

सप्तम्यां सोमवारः स्यान्माघे पक्षे सिते यदा ।
दुर्भिक्षं जायते घोरं विग्रहश्चैव भूभुजाम् ॥
अष्टम्यां यदि पश्यन्ति मार्तण्डमुदयं गतम् ।
न वर्षते तदाऽऽद्रायां श्रावणान्ते तथैव च ॥
नवम्यां चन्द्रबिम्बेन मण्डलं ध्रियते यदि ।
आषाढे सकले वृष्टिर्लोके धान्यमहर्घता ॥
माघस्य शुक्लपक्षे तु सप्तम्यादिदिनत्रये ।
गर्जते वर्षते वाऽब्द आषाढे वृष्टिरुत्तमा ॥
सप्तपञ्चनृपक्षादि तिथिर्माघादिसम्भवा ।
विद्युत् सुवातो मेघाश्च वृष्टिं दृष्ट्वा शुभं भवेत् ॥

---

१. गुरुसंहिता । स० भ० पु० पाण्डुलिपिसंख्या ३४७२५ । पृ० १२–१८ ।

शुक्लपक्षे तु सप्तम्यां मासे मासे हि वर्षति ।
दुर्दिनं वा यदा पश्येद् वर्षाकालः शुभो भवेत् ॥

अत्र श्लोकस्य पूर्वार्द्धे मासे इत्यस्य स्थाने माघमासे इति पाठः समुचिततरः प्रतिभाति ।

माघस्य शुक्लसप्तम्यां बिन्दुपातोऽभ्रसञ्चयः ।
अस्तं वा न प्रदृश्येत हिमं चैव प्रजायते ॥
चत्वारो वर्षते मासांश्चार्धमासेन संयुतान् ।
तत्र देशे सुवृष्टिः स्यात् सुभिक्षं च विनिर्दिशेत् ॥
शुक्लपक्षे तु सप्तम्यां माघमासे प्रवर्षति ।
माघस्य सित सप्तम्यां हिमाभ्राम्बुकणादिभिः ॥
पादैश्चतुर्भिर्विज्ञेयं चातुर्मासस्य वर्षणम् ।
आषाढः प्रथमे पादे द्वितीयः श्रावणो भवेत् ॥
तृतीये भाद्रपदश्चतुर्थे आश्विनस्तथा ।
अभ्रादिकैर्भवत्येवमतिवृष्टौ फलं शृणु ॥
चतुर्मासाः प्रपीड्यन्ते जलपातक्रमेण वै ।
अण्डजैर्बाध्यते शस्यं मूषकैः शलभैः शुकैः ॥
दुर्दिनं वाऽपि पश्येत्तु वर्षाकालं शुभं वदेत् ॥
सप्तम्यां स्वातियोगे यदि पतति हिमं माघमासान्धकारे ।
वायुर्वा चण्डवेगः सजलजलधरो गर्जते वा प्रकामम् ॥
विद्युन्मालाकुलं वा तदपि च गगनं नष्टचन्द्रार्कतारम् ॥
विज्ञेया प्रावृडेषा मुदितजनपदा सर्वशस्यैरुपेता ॥

अत्र तृतीयचरणे तदपि च गगनमित्यस्य स्थाने "यदि भवति नभो" इति पाठोऽन्यत्र लभ्यते, स तु समीचीनतरः ॥

तथैव फाल्गुने चैत्रे वैशाखे च विशेषतः ।
स्वातीयोगं विजानीयादाषाढे च विशेषतः ॥
माघस्य नवमी कृष्णा मूलनक्षत्र संयुता ।
विद्युन्मेघधनुर्भिश्च मेघैरावेष्टितं नभः ॥

मासि भाद्रपदे देवि वर्षते नवमीदिने ।
द्रोणसंज्ञो भवेन्मेघो मयाऽऽख्यातं तव प्रिये ॥
माघस्य नवमी कृष्णा दशम्येकादशी तथा ।
सवाता विद्युता युक्ता कथयन्ति जलं बहु ॥
माघमासे तु सप्तम्यां कृष्णपक्षे स्मराभिधे ।
चतुर्दश्यां तथा देवि पूर्वस्यां दिशि चोत्थिताः ॥
बहूदककरा मेघास्त्वाषाढे सप्तरात्रकम् ।
अमायां च तिथौ तद्वद् यदि भं रेवती भवेत् ।
अत्यर्थं तु क्षितौ नूनं वर्षते नात्र संशयः ॥
माघे मासि ह्यमायां चेदभ्रच्छन्नं नभो भवेत् ।
हिमवातेन संयुक्तमहोरात्रं प्रवर्षति ॥
पञ्चवर्णं तु विज्ञेयं दिव्यगर्भसमुद्भवम् ।
भाद्रपदस्य मासस्य पौर्णमास्यां प्रवर्षति ॥

लोकोक्तिषु माघमासिकवृष्टिगर्भलक्षणानि —

माघ अँधेरी सत्तमी, मेघ विज्जु दमकन्त ।
मास चारि बरसै सही, मत सोचै तू कन्त ॥
नौमी माघ अँधेरिया, मूल रिच्छ कौ भेद ।
तौ भादों नवमी दिवस, जल बरसै बिन खेद ॥
माह अमावस गर्भमय, जो कहु भाति विचारि ।
भादों की पूनौ दिवस, वर्षा पहर जु चारि ॥
माघ सत्तमी, ऊजली, बादल मेघ करन्त ।
तो आसाढ़ मैं भड्डरी, घनो मेघ बरसन्त ॥
माघ सुदी जो सत्तमी, विज्जु मेह हिम होय ।
चार महीना बरसती, सोक करौ मत कोय ॥

---

१. घाघ और भड्डरी की कहावतें । ७७ । १४–१७, ७८ । १८–२०, ८८ । ८१, ८९ । ८५–८६ ॥

माघ जो सातें कजली, आठें बादर होय ।
तो आसाढ़ में धूरवा, बरसे जोसी जोय ॥

माघ उजेरी पञ्चमी परै उत्तम वाय ।
तो जानौ की भादवौं बिन जल कोरो जाय ॥

माघसुदी आठैं दिवस जो कृत्तिका रिख होय ।
की फागुन रोली पड़ै कि सावन महंगो होय ॥

अथवा नौमी निर्मली बादर रेख न जोय ।
तौ सरवर हू सूखहीं महि में जल नहिं होय ॥ इत्यादि ॥

अन्यच्चापि —

माघ पूस जो दाखिना चलै ।
तो सावन के लच्छन भले ॥

माघ में बादर लाल धरे ।
तब जानो सांचो पथरा परै ॥

माघ मास जो परै न सीत ।
मंहगा नाज जानियौ मीत ॥

जब बरसेगा उत्तरा ।
नाज खावै कुत्तरा ॥

पूस में दूना माघ सवाई ।
फागुन बरसे घर से जाई ॥ इत्यादि ॥



१. अत्रैव । उक्त प्रकाशने पृ० ३४ । १३४, ६६ । ३६२, ३६५, ३५ । १५२ तथा ३९ । १८० ॥

# फाल्गुने वृष्टिगर्भादीनां वृष्टिनिमित्तानां पर्यवेक्षणम्

❀

## पराशरोक्तानि फाल्गुने वृष्टिगर्भलक्षणानि—

प्रथमं तावन्महर्षिणा पराशरेण वर्णितानि फाल्गुनमासीयानि वृष्टिगर्भ-पर्यवेक्षणानि द्रष्टव्यानि । तथा हि --

[१]पञ्चम्यादिषु पञ्चसु कुम्भेऽर्के यदि भवति रोहिणीयोगः ।
अधमतमाधममध्यमहदतिमहाम्भसां निपातः ॥

प्रसङ्गेऽस्मिन् महर्षिपराशरवर्णितानि माघ-मासीय-वृष्टिगर्भलक्षणान्यपि द्रष्टव्यानि ।

## नारदोक्तानि फाल्गुने वृष्टिगर्भलक्षणानि—

अत्र पाठो बहुशः खण्डितः संशोधनार्हश्च ।

[२]सप्तमी कृत्तिका युक्ता फाल्गुनस्य सिता यदा ।
तदा भाद्रपदे मासि—मेघः प्रवर्षति ॥
विना वातं घनैश्छन्नं वियदस्यां तिथौ यदा ।
विद्युद् वा दृश्यते तत्र तदा सस्यावृता मही ॥
फाल्गुनस्य त्रयोदश्यामष्टम्यां वृष्टिरुत्तमा ।
यदि स्यादसितायां चेत्तदा लोका निरामयाः ॥
माघे हिमं न पतितं वाता वान्ति न च फाल्गुने ।
न च धूमायितं चैत्रे घनैर्नभस्ततं न तु ॥
करका मोच (न) वैशाखे शुक्रे (शुचौ) चण्डातपो न हि ।
तदातितुच्छा वृष्टिः स्यात् प्रावृट्काले न संशयः ॥
शुक्ले पक्षे शशिनि तनुगे तोयराशिस्थिते वा ।
केन्द्रे याते प्रचुरमुदकं सौम्ययोगे प्रदिष्टम् ॥
पापैर्दृष्टे न च बहुजलं प्रश्नकालेङ्गितज्ञैः ।
वाच्यं सर्वं फलमविकलं चन्द्रवद् भार्गवेऽपि ॥

---

१. कृषिपराशरः । पृ० ११ । श्लो० ४३ ॥
१. नारदीये मयूरचित्रके । उक्त पाण्डुलिप्यां । पृ० १७–१८ ।

**मेघनालाग्रन्थे वर्णितानि फाल्गुनमासीयवृष्टिगर्भलक्षणानि—**

अत्र भाषा बहुशोऽशुद्धा पाठश्च संशोधनार्हः —

[1]सीतास्तं फाल्गुने मासि यदि चेच्छृणु भामिनि ।
तदा दुर्भिक्षमादेश्यं षण्मासावधि धीमता ॥
फाल्गुने सौरिसङ्क्रान्तौ यदा वर्षति माधवः ।
विचित्रं जायते सस्यं . वैशाखज्येष्ठयोस्तथा ॥
फाल्गुने शृणु देवेशि यथा जानन्ति साधकाः ।
सप्तमी शुक्लपक्षस्य कृत्तिकाऋक्षसंयुता ॥
अष्टमी नवमी चैव दशम्येकादशी तथा ।
नभस्ये चेदमावास्यां द्रोणमेघः प्रवर्षति ॥
अथवाश्वियुते मासे चतुर्थी पञ्चमी तथा ।
एवं योगेन देवेशि वर्षते नात्र संशयः ॥
फाल्गुने शुक्लसप्तम्यां पौर्णमास्यां तथैव च ।
निर्वातो गगने मेघो यदि स्याद्विद्युता युतः ॥
तदा देवि भविष्यन्ति सुभिक्षं क्षेममेव च ।
पूर्वोत्तरजवातेन रात्र्यन्ते जलमुत्तमम् ॥
नभस्यकृष्णसप्तम्याममावास्यां तथैव च ।
वर्षते नात्र सन्देहो मयाऽऽख्यातं वरानने ॥
फाल्गुने कृष्णसप्तम्यामष्टम्यादिदिनत्रयम् ।
एभिर्दिनैः समादेश्यं जलयोगसमुद्भवम् ॥
विजला मरुतां यान्ति समेघा च जलान्विताः ।
योगं समुद्भवं देवि चाश्वियुक् मासि वर्षणम् ॥
फाल्गुनस्यतु मासस्य वर्षते चाष्टमीदिने ।
सुभिक्षं च समादेश्यं सस्यसम्पत्तिमुत्तमाम् ॥

---

१. मेघमाला । सरस्वतीभवनपुस्तकालये पाण्डुलिपिसंख्या ३७२०२ । पृ० ३७–३८ । श्लो० १-४१ ॥

अन्त्ये कृष्णतृतीयायां सवातो मेघ दृश्यते ।
आश्विने शुक्ल–तृतीयायां द्वितीयायां च वर्षति ॥
फाल्गुने कृष्णनवमी मूलऋक्षेण संयुता ।
अभ्रच्छन्नस्तथाऽऽकाशोऽष्टमारुतसंयुतः ॥
आश्विन्ने कृष्णसप्तम्यां वर्षते नात्र संशयः ।
रात्रौ वृष्टिर्दिवा वर्षेद्दिने वृष्टिर्भविष्यति ॥

**गुरुसंहितानुसारं फाल्गुनमासे वृष्टिगर्भलक्षणानि—**

गुरुसंहिताग्रन्थेऽपि विषयोऽयं विस्तरेण वर्णितो विद्यते । तथा हि—

[1]फागुने चैत्रमासे च सङ्क्रान्तौ यदि वर्षति ।
विचित्रं जायते शस्यं वैशाखज्येष्ठयोस्तथा ॥
फाल्गुनं शृणु देवेशि येन जानन्ति साधकाः ।
सप्तमी श्वेतपक्षे तु यदि कृत्तिकया युता ॥
अष्टमी नवमी चैव दशम्येकादशी तथा ।
तदा भाद्रपदामायां द्रोणमेघः प्रवर्षति ॥
तदाश्वयुजमासाद्यचतुर्थी - पञ्चमीतिथौ ।
एवं देवि समायोगे वर्षते नात्र संशयः ॥
फाल्गुने कृष्णसप्तम्यां पौर्णमास्यां तथैव च ।
निर्वाता गगने मेघा विजला विद्युता युता ॥
द्वावेतौ जलयोगौ च प्रभूतजलदायकौ ।
नभस्यकृष्णसप्तम्याममायां हि तथैव च ॥
तथैव कृष्णसप्तम्यामष्टम्यां यदि लक्षणम् ।
एभिर्दिनैः समादेश्यो जलयोगसमुद्भवः ॥
अवर्षन्तो यदा यान्ति वारिदा विद्युता युता ।
जलयोगस्तदा ज्ञेयो गर्जितं विद्युता सह ।
एवं योगोद्भवे देवि चाश्वियुङ्मासिवर्षणम् ।

---

१. गुरुसंहिता । स० भ० पु० पाण्डुलिपिसंख्या ३४७२५ । पृ० १६-२० ॥

फाल्गुनवृष्टिसम्बद्धा घाघोक्तयः —

[1]फागुनबदी सुदूज दिन, बादर होय न बीज ।
बरसै सावन-भादवाँ, साधौ खेलौ तीज ॥
पूस में दूना माघ सवाई । फागुन बरसे घर से जाई । इत्यादि ॥



## चैत्रे वृष्टिगर्भादीनां वृष्टिनिमित्तानां पर्यवेक्षणम्

❀

### पराशरोक्तानि चैत्रमासीयवृष्टिगर्भलक्षणानि—

प्रथमं महर्षिणा पराशरेण कथितानि वृष्टिगर्भसम्बन्धीनि पर्यवेक्षणानि द्रष्टव्यानि । तथा हि[2]—

प्रतिपदि मधुमासे भानुवारः सितायां,
यदि भवति तदा स्याच्चित्तला वृष्टिरब्दे ।
अविरलपृथुधारासान्द्रवृष्टिप्रवाहैः,
धरणितलमशेषं प्लाव्यते सोमवारे ॥
अवनितनयवारे वारिवृष्टिर्न सम्यक्,
बुधगुरुभृगुजानां शस्यसम्पत्प्रमोदः ।
जलनिधिरपि शोषं याति वारे च शौरे-
र्भवति खलु धरित्री धूलिजालैरदृश्या ॥
चैत्राद्यभागे चित्रायां भवेच्चेच्चित्तला क्षितिः ।
शेषे नीचैर्न वाऽत्यर्थं क्ष्मा मध्ये बहुवर्षिणी ॥

अत्र द्वितीयचरणे 'भवेच्चेच्चित्तला' इत्यस्य स्थाने 'भवेद्बहुजला' इति, तृतीयचरणे च 'शेषे नीचैर्न वाऽत्यर्थम्' इत्यस्य स्थाने 'शेषेऽपि चैव चात्यर्थम्' इति पाठान्तरम् ।

---

१ घाघ और भड्डरी की कहावतें । पृ० ७८ पद्य—२१ ॥ पृ० ३९ पद्य १८ ॥

२. कृषिपराशरः । पृ० ११-१२ । श्लो० ४४-४७ ॥

मूलस्यादौ यमस्यान्ते चैत्रे वायुरहर्निशम् ।
आर्द्रादीनि च ऋक्षाणि वृष्टिहेतोर्विशोधयेत् ॥

सन्दर्भेऽस्मिन् पराशरोक्तानि माघ मासीय-वृष्टि-गर्भ-लक्षणान्यपि द्रष्टव्यानि ।

**नारदोक्तानि चैत्रमासीयवृष्टिगर्भलक्षणानि--**

अत्र पाठोऽनेकत्रास्पष्टः संशोधनार्हश्च । तथा हि--

प्रतिपदि रविवारश्चैत्रमासे यदि स्यात् ।
न भवति बहुवृष्टिर्दुःखिता लोकसंघाः ॥
अमृतकिरणवारो जास्युजिद्दाक्षितानां ।
भवति ननु धरित्री सस्यतोयातिपूर्णा ॥
वारः स्यान्मन्दकुजयोस्तदा वृष्टिर्न जायते ।
सस्यानि न प्ररोहन्ति विग्रहं यान्ति भूमिपाः ॥
वर्षाकाले तदा मेघा न वर्षन्ति जलं बहु ।
गुरुशुक्रौ यदैकस्मिन् मासि चैत्रे व्यवस्थितौ ॥
सप्तम्यां माघमासे च माधवे प्रथमेऽहनि ।
वान्ति वाताश्च शुभदास्तदा प्रावृषि वर्षणम् ॥

प्रसङ्गेऽस्मिन् नारदीये मयूरचित्रके वर्णितानि 'माघे हिमं न पतितमि'त्यादीनि फाल्गुनवृष्टिलक्षणान्यपि द्रष्टव्यानि ।[1]

**मेघमालाग्रन्थे वर्णितानि चैत्रमासीयवृष्टिगर्भलक्षणानि---**

[2]चैत्रे च सौरिसङ्क्रान्तौ यदि वर्षति माधवः ।
विचित्रं जायते सस्यं वैशाखे ज्येष्ठमन्तरे ॥
वैशाखे श्रावणे चैत्रे पञ्चार्काश्चेद् भवन्ति हि ।
दुर्भिक्षं तत्र जानीयाद् राज्ञो विघ्नं समादिशेत् ॥
शुक्लपक्षेण चैत्रस्य चतुर्थी-पञ्चमीषु च ।
वर्षणं प्राक् शुभं किञ्चित्क्रमाद्दुत्तरतोऽधमम् ॥

---

१. मयूरचित्रके नारदीये । उक्तपाण्डुलिप्यां पृ० ७-८ ॥

२. मेघमाला । स० भ० पु० पाण्डुलिपिसंख्या ३७२०२ । पृ० २८-२९ । श्लो० १-२२ ॥

चैत्र शुक्लस्य पञ्चम्यां रोहिणी दृश्यते यदि ।
साभ्रं नभस्तदा देवि गर्भस्य परिपूर्णता ॥
चैत्रस्य शुक्लपञ्चम्यामभ्रच्छन्नं यदा नभः ।
गोधूमैः श्रावणे मासि द्विगुणं लाभमादिशेत् ॥
द्वितीयो दिवसः प्राप्तश्चैत्रे वातश्च पूरितः ।
नव मेघाः प्रदृश्यन्ते वृष्टिर्भाद्रपदे भवेत् ।
तृतीये दिवसे प्राप्ते उत्तरो यदि मारुतः ॥
नूनं मेघाः प्रदृश्यन्ते कार्तिके वृष्टिमादिशेत् ।
चतुर्थे दिवसे प्राप्ते यदि वर्षति वारिदः ॥
दुर्भिक्षं जायते घोरमनावृष्टिर्न संशयः ।
दिनद्वयं यदा याति वायुर्दक्षिणपश्चिमे ।
तदा न पच्यते धान्यं दुर्भिक्षं चात्र जायते ॥
तृतीयापञ्चमी देवि वायुना उत्तरे यदि ।
सर्वसस्यानि जायन्ते प्रजाः कृतयुगोपमाः ॥
चैत्रमासस्य देवेशि शुक्लपक्षस्य पञ्चमी ।
सप्तम्याञ्च त्रयोदश्यां यदा मेघः प्रवर्षति ॥
तारकापतनं देवि गर्जितं विद्युता सह ।
वर्षाकालस्तदा क्षुद्रो नात्र कार्या विचारणा ॥
चैत्रादि दिग्दिनं यावत् कल्पयित्वा क्रमेण च ।
आर्द्रादि स्वातिपर्यन्तं वृष्टिहेतुं विलोकयेत् ॥
दुर्दिनं वा जलं यानं तत्संख्या भवति ध्रुवम् ।
तत्संख्या जायते वृष्टिर्दग्धमृक्षं वरानने ॥
मूलमादौ यमस्यान्ते चैत्रे कृष्णे निरीक्षयेत् ।
एभिश्च गलितैः ऋक्षैर्गर्भस्रावो विधीयते ॥
सांभ्रैर्निहन्यते वृष्टिर्निरभ्रैर्वृष्टिरुत्तमा ।
एतच्छृणुष्व योगादीन् सावधानसमा प्रिये ॥

चैत्रस्य शुक्लपञ्चम्यां सप्तमीनवमीषु च ।
पूर्णिमायां तथा देवि जलयोगस्य निश्चयः ॥

पञ्चमी सह रोहिण्या सप्तमी शिवभागिनः ।
नवमी सह पुष्येण ज्ञातव्यं दैवचिन्तकैः ॥
पूर्णिमायां स्वातियोगो विद्युन्मेघ-समन्वितः ।
एभिश्च गलितैर्ऋक्षैर्गर्भस्रावो विधीयते ॥

पूर्णपुष्टैः समादेश्यो नान्यऋक्षैः कदाचन ।
भवन्ति गलिता गर्भाः सद्भिर्ज्ञातैर्विचक्षणैः ॥
चैत्रस्य शुक्लपक्षे तु त्रयोदश्यां विशेषतः ।
धूमिका जायते यत्र मेघस्तत्र न वर्षति ॥

**जीवनाथवर्णितानि चैत्रे वृष्टिगर्भलक्षणानि—**

[1]चैत्रशुक्लचतुर्थ्यां तु वायुः शमनदिग्भवः ।
जलदः प्राङ्मुखं गच्छेदाश्विने वृष्टिरन्वहम् ॥

**गुरुसंहितानुसारं चैत्रे वृष्टिगर्भलक्षणानि —**

विषयोऽयं गुरुसंहिताग्रन्थेऽपि विस्तरेण वर्णितो विद्यते । तथा हि —

मैत्राद्यपक्षतो पौष्णं वैशाखे याम्यमेव च ।
ज्येष्ठाद्यपक्षतौ चान्द्रं पुनर्वसु शुचौ तथा ॥
आभिस्तु तिथिभिः सार्द्धं तानि भानि भवन्ति चेत् ।
सुभिक्षं शस्यसम्पत्तिस्तद्वर्षे च जलं बहु ॥
योगाभावे च सर्वेषां दुर्भिक्षं खण्डवर्षणम् ॥

फाल्गुने चैत्रमासे च सङ्क्रान्तौ यदि वर्षणम् ।
विचित्रं जायते शस्यं वैशाखज्येष्ठयोस्तथा ॥
शुक्लपक्षे तु चैत्रस्य चतुर्थीपञ्चमीषु च ।
वर्षणं प्राक्शुभं किंचित्क्रमादुत्तरतो घनाः ॥

---

१. वनमाला । स० भ० पु० पाण्डुलिपि-संख्या ३५३६५ । पृ० ६-७ । श्लो० ३ ॥

चैत्रस्य शुक्लपञ्चम्यां रोहिणी यदि दृश्यते ।
साभ्रं नभस्तदाऽऽदेश्या गर्भस्य परिपूर्णता ॥
चैत्रस्य शुक्लपञ्चम्यामभ्रच्छन्नं यदा नभः ।
निर्मला वा दिशः सर्वा दृश्यन्ते वायुना युता ॥
द्वितीये दिवसे प्राप्ते चैत्रे वायुश्च सर्वतः ।
तत्रमेघाः प्रदृश्यन्ते वृष्टिर्भाद्रपदे ध्रुवम् ॥
तृतीये दिवसे प्राप्ते उत्तरो यदि मारुतः ।
नवमेघाः प्रदृश्यन्ते कार्तिके वृष्टिमादिशेत् ॥
चतुर्थे दिवसे प्राप्ते मेघजालं प्रदृश्यते ।
दुर्भिक्षं जायते घोरमनावृष्ट्या न संशयः ।
दिनद्वयं यदा वाति वायुर्दक्षिणपश्चिमः ।
तदा न दृश्यते धान्यं दुर्भिक्षं चात्र जायते ॥
तृतीयायां च पञ्चम्यां वायुः पूर्वोत्तरो यदि ।
सर्वशस्यानि जायन्ते प्रजाः कृतयुगोपमाः ॥
चैत्रे मासे तु देवेशि शुक्लगे पञ्चमीदिने ।
सप्तम्यां च त्रयोदश्यां यदा देवः प्रवर्षति ॥
तारकापतनं चैव गर्जनं विद्युता सह ।
वर्षाकालस्तदा छिन्नो नात्र कार्या विचारणा ॥
चैत्रस्यादौ दिवसदशकं कल्पयित्वा क्रमेण ।
स्वात्यन्तार्द्राप्रभृति मुनिभिर्वृष्टिहेतोर्विलोक्य ॥
यावत्संख्ये भवति दिवसे दुर्दिनं वाऽथ वृष्टिः ।
तावत्संख्यं भवति नियतं वार्षिकं दग्धमृक्षम् ॥
मूलादियमभान्तं च चैत्रकृष्णे निरीक्षयेत् ।
एभिश्च गलितैश्चैव गर्भस्रावो भविष्यति ॥
साभ्रेऽह्नि हन्यते वृष्टिर्निरभ्रे वृष्टिरुत्तमा ।
आषाढं रोहिणी हन्ति शिवभं श्रावणं तथा ।

पुष्यो भाद्रपदं हन्ति चित्रा चाश्विनमेव च ॥
चैत्रस्य शुक्लपञ्चम्यां सप्तमीनवमीतिथौ ।
पौर्णमास्यां तथा चैव जलयोगविनिश्चयः ॥
पंचमी सह रोहिण्या सप्तमी रौद्रसंयुता ।
नवमी सह पुष्येण ज्ञातव्या कालचिन्तकैः ॥
चित्रायुता पौर्णमासी विद्युन्मेघसमन्विता ।
एभिश्च गलितैर्ऋक्षैर्गर्भस्रावं समादिशेत् ॥
पुष्टैः पुष्टिः समादेश्या नान्यर्क्षैः कदाचन ।
भवन्ति गलिता गर्भा एभिर्नान्यैः प्रवर्षति ॥
चैत्रस्य शुक्लपक्षे तु त्रयोदश्यां तथैव च ।
भूमिका जायते यत्र मेघस्तत्र न वर्षति ॥
आर्द्रादिनवनक्षत्रं शुक्ले चैत्रे निरीक्षयेत् ।
वाताभ्रगर्जनाम्बूनि विद्युत्तत्र न वर्षति ॥
चैत्रे मासि सिते पक्षे सप्तम्यादिदिनाष्टके ।
यदाभ्रं विद्युदम्भो वा नदीदूरे गृहं कुरु ॥
अत्र सर्वत्र वृष्टिस्तु स्वल्पा चेच्छुभकारिका ।
कर्दमादिकरी सा तु ह्यनिष्टा परिकीर्तिता ॥

**लोकोक्तिषु चैत्रमासीयवृष्टिगर्भलक्षणानि —**

[१]चैतमास दशमी खडा (अकाश), जो कहुं कोरा जाय ।
चौमासे भूर बादला भली भाँति बरसाय ॥
चैत पूर्णिमा होइ जो, सोम गुरौ बुधवार ।
घर-घर होइ बधावड़ा, घर-घर मङ्गलचार ॥
असनी गलिया (वर्षा) अन्त (वर्षान्त) विनासे ।
चैत मास जो बिज्जु बिजोवै ।
भरि बैसाखहिं टेसू धोवै ॥

---

१. घाघ और भड्डरी की कहावतें । उक्त प्रकाशने पृ० ७८।२२, २३।२४ । पृ० ७९।२४ । पृ ८०।३१ । पृ० ९०।९१ ॥

चैत मास दशमी खड़ा (आकाश) बादल, बिजुरी होय।
तौ जानौ चितमाहिं यह गर्भ गला सब जोय॥

**अत्र घाघोक्तयः —**

[1]एक बूंद जौ चैत्र में परै।
सहस बूंद सावन की हरै॥
चैत का पछिवां, भादौं जला (जलावृष्टि)॥

— ०❋० —

# वैशाखे वृष्टिगर्भादीनां वृष्टिनिमित्तानां पर्यवेक्षणम्

❀

**पराशरोक्तानि वैशाखमासीयवृष्टिगर्भलक्षणानि —**

प्रथमं तावदत्र पराशरोक्तानि पर्यवेक्षणानि वर्ण्यन्ते तथा हि —

[2]प्रवाहयुतनद्यां तु दण्डं न्यस्य जले निशि।
वैशाख-शुक्ल-प्रतिपत्तिथौ वृष्टिं निरूपयेत्॥
ॐ सिद्धिरिति मन्त्रेण मन्त्रयित्वा शतद्वयम्।
अङ्कयित्वा तु तद्दण्डमङ्कतुल्ये जले क्षिपेत्॥
प्रातरुत्थाय सहसा तदङ्कं तु निरूपयेत्।
समं चैवाधिकं न्यूनं भविष्यजलकाङ्क्षया॥
गतवत्सरवद् वारि वन्या चैव समे भवेत्।
हीने हीनं भवेद्वारि भवेद् वन्या च तादृशी॥

अत्र श्लोकस्य प्रथमचरणे 'गतवत्सरवद्' इत्यस्य स्थाने 'समेन समं' इति, द्वितीयचरणे च 'चैव समे' इत्यस्य स्थाने 'चैवासमे' इति पाठान्तरम्।

---

१. घाघ और भड्डरी की कहावतें। ३६।१५६ तथा ४१।१९०॥

२. कृषिपराशरः। पृ० १२–१५। श्लोक ४८–५६॥

अङ्काधिक्ये च द्विगुणा वृष्टिर्वन्या च जायते ।
इति पराशरेणोक्तं भविष्यद्वृष्टिलक्षणम् ॥

अनेन प्रयोगेण वृष्टिगर्भाणां निष्पत्यर्थं यावतः तापक्रमस्य रात्रिदिवसयोरपेक्षा भवति यावत्याश्चार्द्रतायाः आवश्यकता भवति, तत्सर्वं विज्ञातं भवति । एतेन च भाविनां वृष्टिगर्भाणां पुष्ट्यपुष्ट्योरनुमानं जायते ।

सूर्योदये विषुवतो जगतां विपत्तिः,
मध्यङ्गते दिनकरे बहुशस्यहानिः ।
अस्तङ्गते दिनकरे तु तदर्धशस्यम्,
ऐश्वर्यभोगमतुलं खलु चार्धरात्रे ॥

अत्र दिवसस्य विभिन्नभागेषु सूर्यसङ्क्रमणस्य विविधाः प्रभावाः कथ्यन्ते । मध्यरात्रिकाले सम्पन्नं सङ्क्रमणं शुभं ज्ञेयम् ।

रेखात्रयं समुल्लिख्य ताभिस्ताश्च विवर्धयेत् ।
त्रिशृङ्गं सर्वकोणेषु पर्वतं तत्र दापयेत् ॥
ईशानादि दक्षिणाङ्कान् संलिखेदनलादितः ।
येन येनाजसङ्क्रान्तिस्तेन प्रावृट्फलं भवेत् ॥
अतिवृष्टिः समुद्रे स्यादनावृष्टिस्तु पर्वते ।
कक्षयोश्चित्तला वृष्टिः सुवृष्टिस्तीरसङ्गमे ॥

अत्र श्लोकस्य चतुर्थचरणे 'तीरसङ्गमे' इत्यस्य स्थाने 'शैलसन्धिषु' इति पाठान्तरम् ।. नक्षत्रचक्रादस्मात् भाविवृष्टेर्ज्ञानं जायते । अत्र रेखात्रयं रेखात्रयेण विभज्य कृत्तिकानक्षत्रसंख्यां (३) ईशानकोणे संस्थाप्य दक्षिणावर्तक्रमेणाङ्का लिख्यन्ते । यस्मिन् नक्षत्रे मेष-सङ्क्रान्तिः तस्यैवाङ्कमादाय वृष्टिफलं ज्ञेयम् । प्रसङ्गेऽस्मिन् पराशरोक्तानि माघवृष्टिलक्षणान्यपि द्रष्टव्यानि । तथा च नारदीये मयूरचित्रके —

**नारदोक्तानि वैशाखमासीयवृष्टिगर्भलक्षणानि —**

[१]माधवे शुक्लपञ्चम्यां घनैराच्छादितं नभः ।
गर्जनं वारिवृष्टिश्च कर्तव्यो सस्यसङ्ग्रहः ॥

---

१. नारदीये मयूरचित्रके । उक्तपाण्डुलिपेरष्टमपृष्ठे सरस्वतीभवनसङ्ग्रहे पाण्डुलिपिसंख्या ३४३३२ ॥

वैशाखे शुक्ल-प्रतिपद् दशमी (वृष्टि) संयुता ।
भवत्यत्र न सन्देहः प्रावृट्काले ह्यवर्षणम् ॥

**मेघमालाग्रन्थे वर्णितानि वैशाखमासीयवृष्टिगर्भलक्षणानि —**

वैशाखे पञ्चरूपी स्याज्ज्येष्ठे घर्मान्वितं शुभम् ।
मासाष्टकनिमित्तेन चतुष्टयफलप्रदम् ॥

वैशाखे गर्जितं भूरि सलिलं पवनो घनः ।
उष्णो ज्येष्ठे विशिष्टस्य कुशनैर्गर्भवेष्टितैः

अत्र 'उष्णं ज्येष्ठे विशिष्टं स्यात्किमन्यैर्गर्भचेष्टितै' रिति पाठः समीचीनः प्रतिभाति ।

वैशाखे शुक्लपञ्चम्यामभ्रच्छन्नं यदा नभः ।
गर्जितं वर्षते वापि पूर्ववातो यदा भवेत् ॥

उदयास्तमनं यावद् ज्ञातव्यञ्च विचक्षणैः ।
सङ्ग्रहेत् सर्वधान्यानि प्रचुराणि सुरेश्वरि ॥

मासि भाद्रपदे सस्यं महर्घाणि भवन्तिं हि ।
वैशाखे प्रतिपच्चैव सप्तमी–नवमीषु च ॥

अष्टमी च तथा देवि मेघो गच्छति चाम्बरे ।
माधवो वर्षते चैव वृष्टिर्मध्यम जायते ॥

मेषसङ्क्रान्तिकालाच्च नवस्वपि दिनेष्वथ ।
यत्राभ्रं वातविद्युद्वाप्याद्र्दादौ तत्र वर्षति ॥

अथवा नवमासेषु वाताभ्रादिषु निर्णयः ।
यस्यां दिशि घनं याति दिग्धिष्ण्ये तत्र वर्षति ॥

मेषराशिस्थिते सूर्ये अश्विनीऋक्षसंयुते ।
यदा तु वर्षते देवि मूलगर्भो विनश्यति ॥

---

१. मेघमाला । स० अ० पु० सङ्ग्रहे पाण्डुलिपि-संख्या ३७२०२ । पृ० ३९, ४० । श्लो० १–१६ ॥

२२

यमादिसर्पदेवान्त्यक्रमेण यदि वर्षति ।
पूर्वाषाढादि-पौष्णान्तं गर्भश्चैव प्रणश्यति ॥
पञ्चमे पञ्चमे स्थाने गर्भो पतति नान्यथा ।
एवमृक्षे प्रवर्षति गर्भस्रावः शृणु प्रिये ॥
आर्द्रा-पुनर्वसू पुष्य-आश्लेषा च मघा तथा ।
पञ्चभिर्गलितैर्ऋक्षैश्छिद्रं वर्षति माधवः ॥
आर्द्रा प्रवर्षते देवि गर्जितं वा कथञ्चन ।
सर्वे गर्भाश्च तत्रैव प्रदुष्टा वर्षणे प्रिये ॥

**गुरुसंहिताग्रन्थे वर्णितानि वैशाखमासीयवृष्टिगर्भलक्षणानि —**

तथैव गुरुसंहितायामपि वैशाखमासीयानि पर्यवेक्षणानि विस्तरेण वर्णितान्युपलभ्यन्ते तथा हि —

[1]समारुततडित्तोयस्तनिताभ्रादिलक्षणैः ।
वैशाखः पञ्चरूपी स्यात्तदा गर्भाः शुभाः स्मृताः ॥

**वराहमिहिरोक्तानि वैशाखमासीयवृष्टिगर्भलक्षणानि —**

[2]पवनसलिलविद्युद्गर्जिताभ्रान्वितो यः ।
स भवति बहुतोयः पञ्चरूपाभ्युपेतः ॥
विसृजति यदि तोयं गर्भकाले तु भूरि ।
प्रसवसमयमित्वा शीकराम्भः करोति ॥ इति ॥

अत्रैव मेघमालादिभ्यो ग्रन्थेभ्य उद्धृतानि वचनानि —

[3]वैशाखे गर्जितं विद्युत् सलिलं पवनो घनः ।
उष्णं ज्येष्ठे विशिष्टं स्यात् किमन्यैर्गर्भचेष्टितैः ॥
वैशाखमासप्रतिपत् सप्तमी-नवमीषु च ।
अष्टमीषु तथा चैव मेघो व्याप्नोति चाम्बरम् ॥

---

१. गुरुसंहिता । पृ० २३–२४ ॥
२. अत्रैवोद्धृतम् । पृ० २३–२४ ॥
३. अत्रैव ।

मेघो वर्षति वै क्षिप्रं सुवृष्टिं तत्र निर्दिशेत् ।
एवं च कथितं देवि वैशाखे शुक्ल एव च ॥

**लोकोक्तिषु वैशाखमासीयवृष्टिगर्भलक्षणानि –**

[१]असनी गलिया (वृष्टिः) अन्त (वर्षान्त) विनासै ।
गली रेवती जल को नासै ।
भरनी नासै तृनौ सहूतौ ॥
कृतिका बरसे अन्त बहूतो ।
असुनी गल भरनी गली, गलियो ज्येष्ठा मूर ।
पूर्वाषाढा धूल किन, उपजै सातौ तूर ॥
वैशाख सुदी प्रथमै दिवस, बादर बिज्जु करेइ ।
दामा बिना बिसहिजै, पूरा साख भरेइ ॥



## ज्येष्ठे वृष्टिगर्भादीनां वृष्टिनिमित्तानां पर्यवेक्षणम्



**पराशरोक्तानि ज्येष्ठमासीयवृष्टिगर्भलक्षणानि—**

प्रथमं तावत्पराशरोक्तानि पर्यवेक्षणानि द्रष्टव्यानि । तथा हि--

[२]चित्रा-स्वाती-विशाखासु ज्येष्ठे मासि निरभ्रता ।
तास्वेव श्रावणे मासि यदि वर्षति वासवः ॥
तदा संवत्सरो धन्यो बहुशस्यफलप्रदः ।
ज्येष्ठादौ सितपक्षे च आर्द्रादिदशऋक्षके ।
सजला निर्जला यान्ति निर्जलाः सजला इव ॥

---

१. घाघ और भड्डरी की कहावतें । उक्तप्रकाशने ७९।२४, २७, २९ ॥
२. कृषिपराशरः । पृ० १५ । श्लो० ५७-५८ ॥

## नारदोक्तानि ज्येष्ठमासीयवृष्टिगर्भलक्षणानि—

तथा हि । नारदीये मयूरचित्रके—

[1]ज्येष्ठमासे दर्शतिथौ रात्रौ मेघः प्रदृश्यते ।
दिवसे वातवनावृष्टिर्जायते नात्र संशयः ॥
ज्येष्ठस्य कृष्णप्रतिपद्युक्ता चेद् भानुना यदि ।
वाति वातस्तदोग्रो वै भौमेनाधिः प्रजायते ॥
चन्द्रपुत्रेण दुर्भिक्षं गुरुणा सस्यसम्पदः ।
भार्गवेण सुवृष्टिः स्याच्छशिनान्नाकुला धरा ॥
शनिना च प्रजानाशश्छत्रभङ्गो ह्यवर्षणम् ।
जायते नात्र सन्देहः कर्तव्यो दैवचिन्तकैः ॥
ज्येष्ठे मासि नवर्क्षाणि रौद्रादीनि विलोकयेत् ।
निरभ्रैर्जलसम्पत्तिः साभ्रैर्ज्ञेयमवर्षणम् ॥
श्रवणर्क्षे धनिष्ठायां यदा मेघः प्रवर्षति ।
प्रावृट्काले तदाऽवृष्टिर्घर्मो वृष्टिनिरोधकः ॥
पूर्णिमायाममायाञ्च ज्येष्ठे व्योमावृतं घनैः ।
दिवा वा यदि वा रात्रौ तदा ज्ञेयमवर्षणम् ॥

## मेघमालाग्रन्थे वर्णितानि ज्येष्ठमासीयवृष्टिगर्भलक्षणानि—

[2]प्रसङ्गेऽस्मिन् पाण्डुलिप्यामुपलब्धे पाठेऽनेकत्राशयोऽस्पष्टः । भाषा बहुशो व्याकरणनियमानुपेक्ष्य वर्तते ।

ज्येष्ठस्य प्रथमे पक्षे या तिथिः प्रथमा भवेत् ।
तद्दिने भाति यो वारः स निरीक्ष्यो प्रयत्नतः ॥
भानुना पवनो वाति कुजे व्याधिर्जलक्षयः ।
सोमपुत्रेण दुर्भिक्षं जायते नात्र संशयः ॥

---

१. नारदीये मयूरचित्रके । उक्तपाण्डुलिप्यां पृ० ८, ६ ॥

२. मेघमाला । स० भ० पु० पाण्डुलिपिसंख्या ३७२०२ । पृ० ४०, ४१, श्लो० १-३४ ॥

गुरुभार्गवसोमानां यद्येकोऽपि प्रजायते ।
जलेन पूरिता पृथ्वी धनधान्यसमाकुला ॥
कदाचिद्दैवयोगेन शनिवारः प्रजायते ।
जलशोषः प्रजानाशः छत्रभङ्गो भवेत्तदा ॥
आर्द्रादौ नवनक्षत्रं ज्येष्ठशुक्ले निरीक्षयेत् ।
साभ्रेण हन्यते वृष्टिर्निरभ्रे वर्षते सदा ।
ज्येष्ठे मासि सिते पक्षे आर्द्रादौ दशतारकाः ।
सजला निर्जला देवि निर्जलाः सजला ध्रुवम् ॥

अत्र वक्ष्यमाणोंऽशो गुरुसंहिताग्रन्थे स्पष्टतर इति तत्साहाय्येनास्यापि अर्थावगति-र्जायते ।

ज्येष्ठस्य प्रतिपच्छुक्ले सूर्यस्यास्तं गते यदि ।
द्वितीयां न निरीक्ष्यन्ते चन्द्रं तद्वामदक्षिणे ॥
अलिसिंहधनुश्चक्रं शूलाभः कन्यकाकुले ।
दक्षिणेऽभ्युन्नतो मीने मेषे कुम्भे वृषे समः ॥
मिथुने च मृगे देवि उत्तरेऽत्युन्नतो शशी ।
धनुःकर्के रवौ श्लाघ्यो न चेन्दुरशुभो भवेत् ॥
विचन्द्रं च समे चन्द्रे सुभिक्षं चोत्तरोन्नते ।
शूले रोगभयं कुर्याद्दुर्भिक्षं दक्षिणोन्नतम् ॥
ज्येष्ठेस्य शुक्लपञ्चम्यां गर्जितं श्रूयते यदि ।
दक्षिणस्यां भवेद् वायुरभ्रच्छन्नं यदा भवेत् ॥
धान्यानां सङ्ग्रहः कार्यः आश्विने त्रिगुणो भवेत् ।
ज्येष्ठस्य च सिताष्टम्यां चत्वारो वायुधारणाम् ॥
एकादश्यां तदा देवि पूजां कुर्यात् सुशोभनाम् ।
शुभं मण्डलकं कृत्वा पुष्पैर्धूपैरलङ्कृतम् ।
तेषु स्थानेषु संस्थाप्य महादण्डं महाध्वजम् ॥
कृत्वाऽनेन विधानेन शोधयेत् फलनिर्णयम् ।
एकवातो यदा वाति चतुर्दिनानि चोत्तरे ॥

वर्षितं चतुरो मासान् ध्रुवं वर्षति माधवः ।
विपरीतं यदा वाति यानि चिह्नानि वायुभिः ॥
तानि चिह्नानि वर्षन्ति प्रावृट्काले न संशयः ।

अत्र चिह्नानि इत्यस्य स्थाने 'चिद् भानि' इति पाठो युक्तः ।

यदा तु पश्चिमो वातो जायते च चतुर्दिनम् ।
अनावृष्टिं विजानीयाद् दुर्भिक्षं रौरवं तथा ।
उत्तरे दक्षिणे देवि चतस्रो दिशि वा गते ।
चत्वारो वार्षिका मासान् मेघा वर्षन्ति वै भृशम् ।
विपरीतं यदा वातश्चतुरो दिशि वा गतः ॥

रविर्मार्ग परिभ्रष्टः शृणु तस्यापि लक्षणम् ।
शीतकाले भवेद् वृष्टिर्वर्षाकाले न विद्यते ।
समवाते भवेत्साम्यं वर्षाकालं विनिर्दिशेत् ।
वायव्यं पश्चिमे देवि नैर्ऋत्यं वा यदा तदा ॥
आषाढे श्रावणे छिद्रं द्वौ मासौ वृष्टिरुत्तमा ।
पूर्वस्यां वा तथैशान्यामाग्नेय्यां वा यदा तदा ॥
भाद्रपदाश्विनौ छिद्रमुत्तराषाढश्रावणौ ।
वैशाखे रोहिणीयोगो ज्येष्ठाषाढसमुद्भवः ॥
अवृष्टिर्हन्यते—स मेघैर्वृष्टिकारणम् ।
सुभिक्षं जायते तेन च ईतिभयं भवेत् ॥
अनभ्रैर्मध्यमा वृष्टिः वृष्ट्यां वृष्टिस्तथोत्तमा ॥

निरभ्रेण च ऋक्षस्य रोहिणीन्दुसमागमे ।
सुभिक्षं प्रथमे वांऽशे द्वितीये सर्पकीटकौ ॥
तृतीयांशे गते देवि मध्यमां वृष्टिमादिशेत् ।
चतुर्थे मन्दवृष्टिः स्यात् सर्वसस्यानि पञ्चमे ॥
षष्ठे माषाश्च मुद्गाश्च तुषधान्यानि सप्तमे ।
अष्टमे तु यदा वृष्टिश्छिद्रां वृष्टिं समादिशेत् ॥

न माघे पतितं शीतं ज्येष्ठे मूलं न वृष्टिकृत् ।
नार्द्रायां पतितं तोयं दुष्टकालस्तदा भवेत् ॥
ज्येष्ठस्य पूर्णमास्यां तु मूले प्रस्रवते यदि ।
षष्ठिघस्रा न वर्षन्ति पश्चाद् वर्षति माधवः ॥

**गर्गमते ज्येष्ठे वृष्टिगर्भलक्षणानि[1]—**

ज्येष्ठस्य मासे बहुले च पक्षे,
नक्षत्रयुग्मं श्रवणं धनिष्ठा ।
गर्जन्ति वर्षन्ति च विद्युदभ्रं,
तावच्छुभं याति च गर्गभाषितम् ॥
ज्येष्ठे चापरपक्षे तु द्विऋक्षे श्रवणादिके ।
अवृष्टे नैव वृष्टिः स्याद् वर्षिते वर्षणं सदा ॥
पापानां संख्यया वृष्टिं वृष्टिरोधं विनिर्दिशेत् ।
अस्तस्थाने रवौ ज्येष्ठेऽमावास्यां ऋक्षचिह्नितम् ॥
तदुत्तरे भवेद् बिन्दुरस्तं चेन्न शुभं भवेत् ।
ज्येष्ठे मासि त्वमावास्यां पूर्णमास्यामथाऽपि वा ॥
दिवा वा यदि वा रात्रौ मेघो भवति चाम्बरे ।
अवृष्टिश्च भवेत्तत्र नात्र कार्या विचारणा ॥

**ज्येष्ठकृष्णप्रतिपद्दिवसफलम्—**

[2]ज्येष्ठस्य प्रथमे पक्षे प्रतिपत्तु यदा भवेत् ।
रवौ कृषिविनाशाय सोमे सुभिक्षमाप्नुयात् ॥
भौमे व्याधिभयं प्रोक्तं चन्द्रपुत्रे सुभिक्षकम् ।
गुरौ सस्यविवृद्धिः स्यात् शुक्रे सौख्यं भवेन्नृणाम् ॥
कदाचिद् दैवयोगेन शनिवारो यदा भवेत् ।
जलशोषः प्रजानाशः छत्रभङ्गो विधीयते ॥

---

१. मेघमालाग्रन्थे, उक्त स्थले समुद्धृतम् ।
२. संवत्सरफलम् । सं० भ० पु० पा० सं० ३४३६८ । पृ० १३ ॥

**वराहमिहिरमते ज्येष्ठमासीयवृष्टिगर्भलक्षणानि—**

[१]ज्येष्ठसिते ऽष्टम्याद्याश्चत्वारो वायुधारणा दिवसाः ।
मृदुशुभपवनाः शस्ताः स्निग्धघनस्थगितगगनाश्च ॥
तत्रैव स्वात्याद्ये वृष्टे भचतुष्टये क्रमान्मासाः ।
श्रावणपूर्वा ज्ञेयाः परिस्रुता धारणास्ताः स्युः ॥

**काश्यपमते ज्येष्ठमासीयवृष्टिगर्भलक्षणानि—**

[२]ज्येष्ठस्य शुक्लाष्टम्यां तु नक्षत्रे भगदैवते ।
चत्वारो धारणाः प्रोक्ता मृदुवातसमीरिताः ॥
नीलाञ्जननिभैर्मेघैः विद्युत्स्थगितमारुतैः ।
विस्फुलिंगरजोधूम्रैश्छन्नौ शशिदिवाकरौ ॥
एकरूपाः शुभा ज्ञेया अशुभाः सान्तराः स्मृताः ।
अनार्यैस्तस्करैर्घोरैः पीडा चैव सरीसृपैः ॥
ततः स्वात्यादिनक्षत्रैश्चतुर्भिः श्रावणादयः ।
परिपूर्णाः शुभास्ताः स्युः सौम्याः शिवसुभिक्षदाः ॥
स्वातौ तु श्रावणं हन्याद् वृष्टेऽथैन्द्रादिदैवते ।
भाद्रपदे त्ववृष्टिः स्यान्मैत्रे चाश्वयुजे स्मृता ॥
ऐन्द्रे तु कार्तिके त्वेवं वृष्टे वृष्टिं निहन्ति च ।
एतेषु यदि नो वृष्टिस्तदा सौभिक्षलक्षणम् ॥ इति ॥

**वशिष्ठमते ज्येष्ठमासीयवृष्टिगर्भलक्षणानि—**

[३]यदि ताः स्युरेकरूपाः शुभास्ततः सान्तरास्तु न शिवाय ।
तस्करभयदाश्चोक्ताः श्लोकाश्चाप्यत्र वाशिष्ठाः ॥
सविद्युतः सपृषतः सपांसूत्करमारुताः ।
सार्कचन्द्रपरिच्छन्ना धारणाः शुभधारणाः ॥

---

१. बृहत्संहिता । गर्भधारणाध्यायः ॥
२. अत्रैव टीकायां भट्टोत्पलेनोद्धृतम् ॥
३. उक्तस्थले भट्टोत्पलटीकायामुद्धृतम् ॥

यदा तु विद्युतः श्रेष्ठाः शुभाशाः प्रत्युपस्थिताः ।
तदाऽपि सर्वसस्यानां वृद्धिं ब्रूयाद् विचक्षणः ॥
सपांसुवर्षाः सापश्च शुभा बालक्रिया अपि ।
पक्षिणां सुस्वरा वाचः क्रीडा पांसुजलादिषु ॥
रविचन्द्रपरीवेषाः स्निग्धा नात्यन्तदूषिताः ।
वृष्टिस्तदापि विज्ञेया सर्वसस्यार्थसाधिका ॥
मेघाः स्निग्धाः संहताश्च प्रदक्षिणगतिक्रियाः ।
तदा स्यान्महती वृष्टिः सर्वसस्याभिवृद्धये ॥ इति ॥

## गुरुसंहिताग्रन्थे वर्णितानि ज्येष्ठे वृष्टिगर्भलक्षणानि—

गुरुसंहिताग्रन्थेऽपि पर्यवेक्षणान्येतानि विस्तरेण वर्णितान्युपलभ्यन्ते । तथा हि—

[1]ज्येष्ठस्य प्रथमे पक्षे या तिथिः प्रथमा भवेत् ।
आयाता केन वारेण तां वै पश्येत्प्रयत्नतः ॥
भानुना पवनो वाति कुजो व्याधिकरो मतः ।
राजपुत्रेण दुर्भिक्षं भवतीह न संशयः ॥
गुरुभार्गवसोमानामेकोऽपि यदि जायते ।
जलशोषं प्रजानाशं छत्रभङ्गं च निर्दिशेत् ॥
आर्द्रादिनवऋक्षाणि ज्येष्ठे शुक्ले निरीक्षयेत् ।
साभ्रे च हन्यते वृष्टिर्निरभ्रे वृष्टिरुत्तमा ॥
ज्येष्ठशुक्लप्रतिपादि सूर्यस्यास्तमये प्रिये ।
कीलमादौ समारोप्य ज्ञेयमस्तमने तलम् ॥
द्वितीयायां निरीक्षेत चन्द्रं तद्वामदक्षिणे ।
रवेरस्तमयस्थाने ब्रजेदस्तं हि चन्द्रमाः ॥
मध्यमं जायते वर्षं दुर्भिक्षं खण्डमण्डले ।
सूर्याच्च जायते स्थाने चन्द्रास्तं किल चोत्तरे ॥

---

१. गुरुसंहिता । स० भ० पु० पाण्डुलिपिसंख्या ३४७२५ । पृ० २५-२६ ॥

महासुभिक्षमादेश्यं बहुवृष्टिर्वसुन्धरा ।
दक्षिणे दिशि तत्स्थानात् चन्द्रास्तो यदि पार्वति ।
दुर्भिक्षं रौरवं घोरं विग्रहात् क्षीयते प्रजा ॥
चतुर्दश्याममायां वा ज्येष्ठस्य प्रतिपद्दिने ।
आषाढे च विशेषेण शशिसूर्यनिरीक्षणम् ॥
ज्येष्ठे प्रत्यूषप्रभवो वायुस्तापकरो रविः ।
अतिवृष्टिं विजानीयात् तस्मिन् वर्षे न संशयः ॥
चित्रा-स्वाति-विशाखासु यस्मिन् मासि न वर्षति ।
तन्मासे निर्जला मेघा यदि वर्षे न वर्षति ॥
ज्येष्ठस्य शुक्लपञ्चम्यां गर्जितं श्रूयते यदि ।
दक्षिणस्यां यदा वायुरभ्रच्छन्नं यदा नभः ।
शस्यानां सङ्ग्रहं कुर्यात् त्रिगुणोऽश्विनके भवेत् ॥

अत्र वृहस्पतिसंहितातो धारणाध्यायः समुद्धृतः, परमयमेवांशः काश्यपवचनैः सह वृहत्संहितायामपि विद्यते, अतोऽविशेषादत्र नोद्ध्रियते। अतः परम् अयमेव विषयः किञ्चित्पाठान्तरैः सह मेघमालाग्रन्थादप्युद्धृतं दृश्यते। तथा हि—

ज्येष्ठस्यैव तु मासस्य शुक्लपक्षे शृणु प्रिये ।
पूजां सुशोभनां कृत्वा ........................ ।
उच्चस्थाने तु संस्थाप्य महादण्डं महाध्वजम् ।
एवं कृत्वा प्रयत्नेन प्रकुर्यात् कालनिर्णयम् ।
एकवातो यदा वाति चतुर्दिनानि चोत्तरे ।
चतुरो वार्षिकान् मासान् ध्रुवं वर्षति माधवः ॥
विपरीतः यदा वाति यानिचिद् भानि वा पुनः ।
तानिचिद् भानि वर्षन्ति प्रावृट्काले न संशयः ॥
प्रथमं पश्चिमो वातः चतुर्दिनानि वाति चेत् ।
अनावृष्टिं विजानीयाद् दुर्भिक्षं रौरवं भवेत् ॥
उत्तरोऽप्यथ चाग्नेयश्चतस्रो हन्ति वा दिशः ।
चत्वारो वार्षिकान् मासान् मेघा वर्षन्ति वै भृशम् ॥

विपरीतं यदा वाति चतस्रो हन्ति वा दिशः ।
रविमार्गपरिभ्रष्टः शृणु तस्यापि लक्षणम् ॥

शीतकाले भवेद् वृष्टिः वर्षाकाले न विद्यते ।
विपरीतो यदा वातो वर्षाकाले विनिर्दिशेत् ॥

वायव्यां पश्चिमे चैव नैर्ऋत्यां यान्ति वायवः ।
आषाढे श्रावणे छिद्रं द्वौ मासौ वृष्टिरुत्तमा ॥

पूर्वस्यां तथैशान्यामाग्नेय्यां यान्ति वायवः ।
भाद्रपदाश्विनौ छिद्रमाषाढे वृष्टिरुत्तमा ॥

वक्ष्यामि रोहिणीयोगं ज्येष्ठाषाढसमुद्भवम् ।
अवृष्टिदं नभोऽव्यग्रं समेघं वृष्टिकारम् ॥

सुभिक्षं जलपातेन न चैवेति भयं क्वचित् ।
अभ्रैस्तु मध्यमा वृष्टिर्वृष्टे वृष्टिस्तथोत्तमा ॥

निरभ्रे न तु वृष्टिः स्यात् रोहिणीन्दुसमागमे ।
सुभिक्षं प्रथमे पादे द्वितीये सर्पकीटकाः ॥

पादे चैव तृतीये तु मध्यमां वृष्टिमादिशेत् ।
चतुर्थे मन्दवृष्टिः स्यात्सर्वशस्यानि पञ्चमे ॥

षष्ठे तु मुद्ग-माषाश्च तुषधान्यानि सप्तमे ।
अष्टमे तु महावृष्टिः छिद्रं वर्षति माधवः ॥

न माघे पतितं शीतं ज्येष्ठे मूलं च वृष्टिकृत् ।
नार्द्रायां पतितं तोयं दुष्टकालस्तदा मतः ॥

ज्येष्ठस्य पूर्णिमायां तु मूलं वै वर्षते यदि ।
षष्ठि घस्रा न वर्षन्ति पश्चाद् वर्षन्ति वारिदाः ॥

पादानां संख्यया वृष्टौ वृष्टिरोधं विनिर्दिशेत् ॥

अत्र ज्येष्ठपूर्णिमायां मूलस्य चतुर्षु पादेषु वृष्टिं वीक्ष्य तथैव चतुर्षु वृष्टि-मासेषु वृष्टिरोधो ज्ञातव्य इत्याशयः ।

**गर्गमते ज्येष्ठे वृष्टिगर्भलक्षणानि[1]—**

इतः पूर्वमपि गुरुसंहिता ग्रन्थोक्तविषयाणां वर्णने गर्गमतं समुद्धृतम् ।

ज्येष्ठे च मासे बहुले च पक्षे नक्षत्रयुग्मं श्रवणो धनिष्ठा ।
यावत्घटी गर्जितविद्युदभ्रं तावच्छुभं वर्षति गर्गभाषितम् ॥

ज्येष्ठे चापरपक्षे तु द्वे ऋक्षे श्रवणादिके ।
अवर्षणे न वर्षन्ति वर्षिते वर्षणं सदा ॥

अवस्थानं रवेर्ज्येष्ठे ह्यमायां यन्न वीक्ष्यते ।
तदुत्तरेण चन्द्रास्ते सुवृष्टिश्च महर्घता ॥

ज्येष्ठे मासे ह्यमायां वै पौर्णमास्यामथापि वा ।
दिवा वा यदि वा रात्रौ मेघो भवति चाम्बरे ॥
अवृष्टिस्तु भवेत्तत्र नात्र कार्या विचारणा ॥

**लोकोक्तिषु ज्येष्ठमासीयवृष्टिगर्भलक्षणानि[2] —**

तपै मृगशिरा जोय, तो वर्षा पूरन होय ॥
जेठ मास जो तपै निरासा, तो जानो वर्षा की आसा ।
जै दिन जेठ बहै पुरवाई, तै दिन सावन धूर उड़ाई ॥

रोहिनी बरसै मृगतपै, कुछ कुछ अद्रा जाय ।
घाघ घाघिनी से कहै, श्वान भात नहिं खाय ॥

**तथा च[3] —**

भरनी नासै तृनौ सहूतौ, कृतिका बरसै अन्त (वर्षान्त) बहूतौ ॥
उतरे जेठ जो बोलैं दादर, कहैं भड्डरी बरसैं बादर ॥
रोहिनी जो बरसै नहीं, बरस जेठ (ज्येष्ठा) औ मूर ॥
एक बूंद स्वाती परै, उपजै तीनौ तूर ॥

---

१. उक्तस्थले गुरुसंहिताग्रन्थे समुद्धृतम् ॥

२ घाघ और भड्डरी की कहावतें । उक्तप्रकाशने ३६, १५७, १६१ । १६।१५१ ।

३. अत्रैव । ७९।२४, ८०।३३, ८२।४५, ८४।५८, ९०।९४, ९१।९७-१०० ।

सर्व तपै जो रोहिनी सर्व तपै जो मूर ।
परिवा तपै जो जेठ की उपजै सातौ तूर ।
मृगसिर वायु न बाजिया, रोहिनि तपै न जेठ ।
बीन किसानिन कांकरा, खड़ा खेजरी हैठ ॥
जेठ बदी दशमी दिना जो शनिवासर होइ ।
पानी होय न धरनि पर बिरला जीवै कोइ ।
जेठ उजारे पच्छ में, आर्द्रादिक दश रिच्छ ।
सजल होंय निर्जल कह्यौ, निर्जल सजल प्रत्यच्छ ॥
स्वाति विशाखा चित्तरा, जेठ सु कोरा जाय ।
पिछलो गर्भ गल्यो कहौ, बनी साख मिटि जाय ॥
तपा जेठ में जो चुइ जायं, सभी नखत हल्के परि जायं ॥
जेठ उज्यारी तीन दिन, अद्रा रिख बरसन्त ।
भाखै जोसी भड्डरी, दुर्भिछ अवसि करन्त ॥



## आषाढे वृष्टिगर्भादीनां वृष्टिनिमित्तानां पर्यवेक्षणम्



### पराशरोक्तानि आषाढे वृष्टिगर्भलक्षणानि—

प्रसङ्गेऽस्मिन् प्रथमं पराशरोक्तानि पर्यवेक्षणानि द्रष्टव्यानि । तथा हि[१]—

आषाढ्यां पौर्णमास्यां सुरपतिककुभो वाति वातः सुवृष्टिः ।
शस्यध्वंसं प्रकुर्याद् दहनदिशिगतो, मन्दवृष्टिर्यमेन ।
नैर्ऋत्यां शस्यहानिर्वरुणदिशि जलं वायुना वायुकोपः ।
कौबेर्यां शस्यपूर्णां प्रथयति नियतं मेदिनीं शम्भुना च ॥

१. कृषिपराशरः । पृ० १६ । श्लो० ५६-६१ । टिप्पणी च ॥

आषाढस्य सिते पक्षे नवम्यां यदि वर्षति ।
वर्षत्येव तदा देवस्तत्रावृष्टौ कुतो जलम् ॥
शुक्लाषाढ्यां नवम्यामुदयगिरितटी निर्मलत्वं प्रयाति ।
स्वीयं कायं विधत्ते खरतनुकिरणो मण्डलाकारयोगम् ॥
जीमूतैर्वेष्टितोऽसौ यदि भवति रविर्गम्यमानोऽस्तशैले ।
तावत्पर्यन्तमेव प्रगलति जलदो यावदस्तं तुलायाः ॥

अत्र पाठान्तरम्--

आषाढ-शुक्लनवमीप्रभवप्रभाते,
सूर्यो यदा प्रकटमण्डलमभ्युदेति ।
मध्यन्दिनेऽपि यदि वा परिवेषमेति,
सायं ह्यनावृततनुर्यदि वाऽस्तमेति ॥
तत्र त्रयं द्वितयमप्यथवैकमिष्टां,
वृष्टिं समादिशति नात्र विकल्पहेतुः ।
आश्रावणं स्रवति संवृतवारिधारा-
माकार्तिकं पृथुपयोधरसान्द्रबिन्दुः ॥

अत्र प्रथमश्लोकस्य चतुर्थचरणे 'ह्यनावृततनुः' इत्यस्य स्थाने 'घनावृततनुः' इति पाठान्तरम् । एतद्धि पर्यवेक्षणद्वारा परीक्षणमर्हति ।

**नारदोक्तानि आषाढे वृष्टिगर्भलक्षणानि—**

अत्रानेकशः पाठोऽस्पष्टः संशोधनार्हश्च ।

[1]'आषाढमासे सितपक्षपञ्चमी रव्यादिवारादियथाक्रमेण ।
अत्यल्पवृष्टिर्विपुला च वृष्टिः युश्रुभंक्षेत्रमसुखेचिनाशम् ॥
आषाढे शुक्लपञ्चम्यां शुभवारे शुभेक्षिते ।
सम्पूर्णा निखिला धात्री धनधान्याकुला धरा ॥
आषाढे कृष्णपक्षे च ह्यष्टम्यां रजनीपतिः ।
दृश्यते मेघमध्ये तु तदा पृथ्वी जलाप्लुता ॥

१. मयूरचित्रकम् । स० भ० पु० पाण्डुलिपिसं० ३४३३२ । पृ० ९, १०, ११, १२ ॥

तस्मिन्नेव यदा रात्रौ निर्मलं शशिलाञ्छनम् ।
दृश्यते छिद्रसंयुक्तं तदा वाच्यमवर्षणम् ॥
आषाढकृष्णपक्षे तु निरभ्रे रविमण्डले ।
न वारिदाः प्रवर्षन्ति तदा प्रावृष्यवर्षणम् ॥
आषाढे स्वातिनक्षत्रे सविद्युत्तोयवर्षणम् ।
तदा स्यादन्ननिष्पत्तिः पृथ्वी स्याद्वारिसङ्कुला ॥

उदये वाऽथ मध्यान्हे सन्ध्यायां सूर्यमण्डलम् ।
मेघच्छन्नं न शुभदं नवम्यां च शुचौ सिते ॥
आषाढे मासि सङ्क्रान्तौ यदि वर्षति वारिदः ।
तदा व्याधिभयं विद्याच्छ्रावणे शोभनं भवेत् ॥

वह्निवेदाष्टनन्देन्द्रविंशत्संख्यासु (३।४।८।९।१४।२०) भास्करः ।
तिथिष्वार्द्रां यदा याति कष्टदः शेषकं शुभः ।
रवौ भौमे तथा मन्दे रौद्रभं याति भास्करः ।
तदा त्वशुभदः प्रोक्तः शुभदः शेषवासरे ॥
रोहिण्यर्क्षे यदाऽऽषाढे विद्युद्वारिदवर्षणम् ।
रोधितश्च घनैर्व्योम तदा सर्वं शुभं भवेत् ॥
न तत्र वारिपतनं न च पूर्वोत्तरानिलौ ।
तदा कालोऽतिघोरः स्यात् प्राणिनां नात्र संशयः ॥

प्रजापत्यर्क्षगे चन्द्रे पूर्वाह्णे वाति मारुतः ।
शुभदः शुभमादेश्यं वृष्टिः श्रावणभाद्रयोः ॥
अह्नस्तु पश्चिमे भागे पश्चिमौ द्वौ प्रवर्षतः ।
मध्याह्ने वाति वायुश्चेन्मध्यौ मासौ जलप्रदौ ॥

समस्तं दिवसं वाति यदा वातः शुभप्रदः ।
श्रावणादिषु मासेषु तदा सम्पत्तिरुत्तमा ॥
वाति चेदशुभो वायुर्व्यत्यासेन फलं भवेत् ।
तत्र············तदा ज्ञेयं शुभाशुभम् ॥

प्राजेश नक्षत्रगते सुधानिधौ,
शुभाश्च वाता गगनं च निर्मलम् ।
मृगाः खगाः शान्तदिगानना यदा,
नन्दन्ति लोकाः सुखिनस्तदा स्युः ॥

माञ्जिष्ठशुक-कौपस्वर्णक्रौञ्चसमप्रभाः ।
अच्छिन्नमूलास्तु स्निग्धाः शुभदा गर्जन्तो घनाः ॥

ओतप्रोत मेषकानुरूपा छिन्ना भिन्ना वाग्विहीनातिरूक्षाः ।
उष्ट्राकारा वानरप्रख्यदेहा मेघाः प्रोक्ता दुःखदा वै प्रजानाम् ॥

शाक्रोद्भूतैर्मारुतैर्मेघसङ्घैः
पृथ्वी सस्यव्यापृताऽऽनन्दयुक्ता ।
वह्न्युद्भूतैर्मारुतैर्वह्निकोपोऽन्ननाशो
याम्यैरन्नं क्षीयते राक्षसोत्थैः ॥

पश्चाज्जातैर्वारिवृष्टिः समग्रा
वाय्वोद्भूतैर्वातभूकम्पदिग्दाहवातयुक्ता च वृष्टिः ॥
वृष्टिः सस्यं सौम्यकाष्ठासमुत्थे—
ऐशे लोका वीतशोका भवन्ति ॥

उल्का निर्घातभूकम्पदिग्दाहाशनिविद्युतः ।
नादा मृगाणां सङ्ग्राह्या परिवेषाम्बुधरास्तथा ॥

अत्र पूर्व श्लोकेषु पाठो बहुशः खण्डितः, त्रुटिपूर्णश्च । अत आशयोऽप्यस्पष्टः । अत्र 'सङ्ग्रास्वायुथेयषे'तिस्थाने 'सङ्ग्राह्यापरिवषे'तिपाठः प्रसङ्गतः स्वीकृतः ।

दक्षिणेन यदा याति रोहिण्या रजनीकरः ।
दूरस्थो निकटस्थो वा जगतः कष्टदायकः ॥
उत्तरस्यां स्पृशन् याति रोहिणीं रोहिणीपतिः ।
सोपसर्गा तदा वृष्टिरस्पृशन् सुखिनो जनाः ॥
यथोक्तं रोहिणीयोगे फलं स्वातौ विचिन्तयेत् ।
आषाढे यद् विशेषोऽत्र तदहं वक्ष्यतः परम् ॥

श्रावणे फाल्गुने मासे चैत्रवैशाखयोरपि ।
आषाढे स्वातियोगोऽयं विचार्यो दैवचिन्तकैः ॥

आषाढमासस्य च पौर्णमास्यां सूर्यास्तकाले यदि वाति वायुः ।
पूर्वस्तदा सस्ययुता च मेदिनी नन्दन्ति लोका जलदायिनो घनाः ॥

कृशानुवायौ मरणं प्रजानां सस्यस्य नाशः खलु वृष्टिनाशः ।
याम्ये मही सस्यविवर्जिता······परं यान्ति नृपा विनाशम् ॥

नैशाचरो वाति यदाऽत्र वातो न वारिदो यच्छति वारि भूरि ।
तदा मही सस्य विवर्जिता स्यात्, क्रन्दन्ति लोकाः क्षुधया प्रपीडिताः ॥

आषाढमासे यदि पौर्णमास्यां सूर्यास्तकाले यदि वारुणोऽनिलः ।
प्रवाति नित्यं सुखिनः प्रजाः स्युः जलान्नयुक्ता वसुधा तदा स्यात् ॥

वायव्यवाते जलदागमः स्यात्, अन्नस्य नाशः पवनोद्धता च ।
सौम्येऽनिले धान्यजलाकुला धरा नन्दति लोका भयदुःखवर्जिताः ॥

ऐशेन वृद्धिर्बहुवारिपूरिता धरा च गावो बहुदुग्धसंयुताः ।
भवन्ति वृक्षाः फलपुष्पदायिनो वातेऽभिनन्दन्ति नृपाः परस्परम् ॥

आषाढी योगोऽयं सम्यक् प्रोक्तो मुनिमतं समालोक्य ।
यज्ज्ञात्वा दैवविदो लोके ख्यातिं समायान्ति ॥

**मेघमालाग्रन्थे वर्णितानि आषाढमासीयवृष्टिगर्भलक्षणानि --**

प्रसङ्गेऽस्मिन् ग्रन्थस्य पाण्डुलिप्यामुपलब्धे पाठे लिपित्रुटीनामाधिक्याद् अनेकत्र आशयोऽप्यस्पष्टः ।

[1]आषाढेषु च मासेषु रोहिणीयोगमुत्तमम् ।
यद्यभ्रं विद्युदम्भो वा कालो निष्पद्यते तदा ॥
विनष्टो रोहिणीयोगो न पूर्वश्चोत्तरोऽनिलः ।
वृषात्युश्च ग्रहाद् ग्रामाग्रज्ञातऋक्षलक्षणम् ॥ (अत्र पाठोऽस्पष्टः)

---

१. मेघमाला (स०भ०पु० पाण्डुलिपि सं० ३७२०२) पृ० ४१-४५ श्लो० १-७२ । पृ० ३७ । श्लो० ३६ ॥

माघे च फाल्गुने चैत्रे वैशाखज्येष्ठयोस्तथा ।
स्वातियोगं विजानीयादाषाढेषु तथैव च ॥
आषाढे स्वातिनक्षत्रे जलयोगः स्फुटो भवेत् ।
यद्यभ्रं वातविद्युद्वा धान्यनिष्पत्तिकारणम् ॥
आषाढमासे प्रथमे च पक्षे, निरभ्रदृष्टे रविमण्डले च ।
न विद्युतो गर्जति नैव वृष्टिर्मासद्वयं वर्षति नैव मेघः ॥
आषाढ-शुक्लपञ्चम्यां पश्चिमो यदि मारुतः ।
गर्जते वर्षते वाऽपि इन्द्रचापं च दृश्यते ॥
मेघरुद्धा दिशः सर्वा दृश्यन्ते धनुषान्विताः ।
सर्वधान्यं तु सङ्ग्राह्यं तदा मासचतुष्टयम् ॥
नवम्यां यदि वाऽऽषाढे शुक्लायां निर्मलो रविः ॥
उदये वाऽथ मध्याह्ने घनैश्छन्नस्तथास्तमे ।
वर्षते चतुरो मासान् विपर्यासे विपर्ययः ॥
एवं देवि समायोगो मयाऽऽख्यातः सुनिश्चितः ।
पार्वति ह्युत्तराषाढे शुक्ले प्रतिपदा दिने ॥
पुनर्वसुश्च मासस्य वृष्टिः स्याद् भवति स्फुटम् ।
आषाढे मासि सङ्क्रान्तौ यदा वर्षति माधवः ॥
व्याधिरुत्पद्यते घोरा श्रावणे शोभनं तदा ।
आषाढे तु यदा देवि द्वादश्यां प्रतिपद्दिने ।
पूर्णमास्याममावास्यां महावातं विनिर्दिशेत् ।
तदा देवि भवेन्नित्यं देवो वर्षति यत्नतः ॥
वर्षाकाले त्रिमासेषु नक्षत्रं वर्धते स्फुटम् ।
तिथिस्तु वर्धते तत्र ध्रुवं कालो विनश्यति ॥
ऋक्षातिरेके मासस्य सौख्यश्च प्रवर्तते ।
प्रभाते पश्चिमेन्द्रस्य धनुश्च यदि दृश्यते ॥
वारुणश्चैव नक्षत्रं शीघ्रं वर्षति माधवः ।
आषाढे तु घटीषष्ट्या मासद्वादशनिर्णयः ॥

पञ्चनाडी भवेन्मासः षष्ठ्या वर्षस्य निर्णयः ।
सर्वरात्रौ यदाऽभ्राणि, वातौ पूर्वोत्तरौ यदि ॥
यस्मिन् काले न वर्षन्ति गुष्टाजापतिरोप्सितम् ।
यत्र मासविभागेन निर्मलं जायते प्रिये ॥
नाभ्रं नभो न मेघस्य वातौ पूर्वोत्तरौ नहि ।
न वर्षते तदा देवि दुष्टकालस्तदा भवेत् ॥
यत्र हानिश्च वृष्टि स्याद्विज्ञेयं गर्गभाषितम् ।
यत्राभ्रं पञ्चनाडीषु वातौ पूर्वोतरौ यदि ॥
तस्मिन् मासे तु विज्ञेया वृष्टिर्भवति भूयसी ॥
तत्रादौ च विजनीयात् पवनाभ्रादिमानतः,
षष्ठ्या विरहिते देवि पूर्णिमा शुभदायिनी ॥
दिनरात्रिविभागेन यदाभ्राणि भवन्ति चेत् ।
तस्मिन् काले तु वृष्टिः स्याद् शुक्लनाडीप्रमाणतः ॥
येषु मासेषु ये दग्धा गर्भाः पौषादिसम्भवाः ।
तत्रादौ पञ्चनाडीषु चन्द्रो भवति निर्मलः ॥
पौषादिसम्भवे गर्भे ध्रुवमुत्पातसम्भवः ।
तेनाषाढी दिनं सर्वं द्रष्टव्यं वृष्टिहेतवे ॥
यदाऽऽषाढी दिनं रात्रावभ्रैर्वातैश्च धारितम् ।
तदा गर्भः शुभो ज्ञेयः शीतकालेऽपि सर्वदा ॥
एकमेवं दिनं प्रेक्ष्य कालनिष्पत्तिहेतवे ।
अष्टयामाभ्रभित्तौ च वृष्टिं यावत्तदा शुभाम् ॥
आषाढीपूर्णिमारात्रौ यदि चन्द्रं न पश्यति ।
चतुरोऽपि तदा मासान् जलं वर्षति माधवः ॥
चतुर्दशी यदाऽऽषाढी हीनवर्षा यदा भवेत् ।
भाद्रश्रावणतो ग्राह्यं समर्घं च समे समम् ॥
अन्यं च कथयिष्यामि तिथिगर्भञ्च तूत्तमम् ।
आषाढशुक्लपक्षस्य चतुर्थी पञ्चमी तथा ॥

षष्ठी च सप्तमी देवि अमावास्या प्रतिपदा ।
स्वयमेव भवेद् गर्भो वर्षते नात्र संशयः ॥
शुचौ कृष्णचतुर्थ्यां तु उद्यत्प्रच्छादितो रविः ।
त्रिमासं पक्षसंयुक्तं तदा वर्षति माधवः ॥
शुचौ कृष्णचतुर्थ्यां तु भग्नं भास्करमण्डलम् ।
न वर्षते तदा देवः सदा कष्टतरं जलम् ॥
कृष्णाषाढचतुर्थ्यां तु पूर्वाभाद्रपदा भवेत् ।
तदा वर्षति पर्जन्यः प्रावृट्काले सदा प्रिये ॥
न तां भाद्रपदां मन्ये जलदेवो न वर्षति ॥
अभ्राणि पीतवर्णानि कृष्णवर्णानि पार्वति ।
पश्चिमे चैव सन्ध्यायामेवं देवि भविष्यति ॥
आषाढे दशमी कृष्णा सुभिक्षाय सरोहिणी ।
एकादशी तु मध्यस्था द्वादशी कालभञ्जनी ॥
किंचित्सी (च्छी) तादिभिर्योगस्तदा धात्री जलप्लुता ।
आषाढे नवमी देवि दशम्यां च यदा भवेत् ॥
साभ्रं गर्जति अम्भोदैर्नदीदूरे गृहं कुरु ।
चतुरोऽपि तदा मासान् जलं वर्षति माधवः ॥
तस्मिन् दिने तु सूर्यो वै निर्मलो दृश्यते नभः ।
तत्र तोयं न पश्यामि वर्जयित्वा महानदीम् ॥
आषाढी पूर्णिमायां तु पूर्ववातो यदा भवेत् ।
निष्पत्तिः सर्वधान्यानामारोग्यं च भविष्यति ॥
आषाढ्यामग्निवातश्चेदस्थिशेषा महीतदा ॥
आषाढी पूर्णिमायां तु दक्षिणो यदि मारुतः ।
सकूपेषु तडागेषु तथा निर्झरणेषु च ॥
तदा न दृश्यते तोयं देवि देवो न वर्षति ॥
आषाढीपूर्णिमायां तु नैर्ऋत्यां यदि मारुतः ।
विक्रयित्वा तदा सर्वं कर्तव्यो धान्यसङ्ग्रहः ॥

आषाढी पूर्णिमायां तु पश्चिमो यदि मारुतः ।
निष्पत्तिः सर्वधान्यानां लोके वर्षति माधवः ॥

आषाढीपूर्णिमायां तु वायव्यां यदि मारुतः ।
नकुलाः शलभाश्चैव मूषकाश्च पतन्ति वा ॥
आषाढी पूर्णिमायां तु उत्तरो (ऐशानो) यदि मारुतः ॥
गीतवाद्यरता लोकाः सुभिक्षं प्रबलं भवेत् ॥

आषाढीपूर्णिमायां तु चतुर्दिक्षु च मारुतः ।
धान्यानि च महर्घाणि वह्निदाहः प्रकीर्तितः ॥
आषाढी त्वधिका तस्य समर्घं तु तदा मतम् ।
संवत्सरो वर्तमानः शून्यो याति सुनिष्फलः ।
निर्वातगगना देवि यदाऽऽषाढस्य पूर्णिमा ॥
तदा तु सर्वमेदिन्यां जलं नास्तीति कथ्यते ।
पूर्णिमाऽहर्निशं देवि इन्द्रचिह्नं प्रदृश्यते ॥
अस्तं गच्छति तीक्ष्णांशौ सस्यनिष्पत्तिरुत्तमा ॥
आषाढीपूर्णिमाऽऽषाढे वर्षं यावच्छुभं भवेत् ।
आवर्ते धान्यनिष्पत्तिः प्रजासौख्यमविग्रहम् ॥

मूलमुत्तराधिष्ण्येन पूर्णमासी यदा भवेत् ।
अवर्षं मध्यमं धान्यं देशे सर्वत्र दृश्यते ॥
एतच्च परमं गुह्यं गर्भाधानसमुद्भवम् ।
विद्युत्संयोगजं सर्वं न देयं यस्य कस्यचित् ॥

आषाढीपूर्णिमायां तु यदीन्दुग्रहणं भवेत् ।
तदा च सर्वद्रव्याणां सङ्ग्रहं कारयेद् बुधः ॥
आषाढे नैव वृष्टिः स्यात्तदा किंचित्कृतो बुधैः ।
भविष्यति वरो योगः श्रावणे सप्तमी दिने ।
आषाढस्यासिताष्टम्यां घनच्छन्नोदये शशी ।
तदा तु वर्षते मेघः सर्वसस्यं भवन्ति हि ॥

## गुरुसंहिताग्रन्थे वर्णितानि आषाढे वृष्टिगर्भलक्षणानि —

अयं विषयो गुरुसंहिताग्रन्थेऽपि विस्तरेण वर्णितो दृश्यते। पूर्ववदेवात्रापि भाषा बहुशत्रुटिपूर्णा। तथा हि--

'यावती मुक्तिराषाढे शुक्लप्रतिपदा दिने।
पुनर्वसोश्चतुर्मास्यां वृष्टिः स्यात्तावती स्फुटम् ॥
आषाढमासे प्रथमे च पक्षे निरभ्रदृष्टे रविमण्डले च।
न विद्युतो गर्जति नैव वृष्टिर्मासद्वयं वर्षति नैव देवः ॥
आषाढे शुक्लपक्षे तु रोहिणीयोग उत्तमः।
तत्राभ्रं विद्युदम्भो वा कालो निष्पद्यते तदा ॥
न वृष्टी रोहिणीयोगे न चेत्पूर्वोत्तरोऽनिलः।
वर्षा नैव गृहं यामः पर्याप्तं कृपिलक्षणम् ॥
माघे च फाल्गुने मासि चैत्रवैशाखयोस्तथा।
स्वातियोगं विजानीयादाषाढस्य सितेऽपि वा ॥
आषाढे स्वातिनक्षत्रे जलयोगः स्फुटो भवेत्।
तत्राभ्रं विद्युदम्भो वा धान्यनिष्पत्तिकारणम् ॥
यदा नवम्याश्चाषाढे शुक्लायां निर्मलो रविः।
तस्यामेव तिथौ रात्रौ सच्छिद्रः शशलाञ्छनः ॥
दृश्यते निर्गतो वाऽपि तदा कालोऽति दुस्तरः ॥
उदये वाऽथ मध्याह्ने यन्नक्षत्रं तथाऽस्तके।
वर्षते चतुरो मासान् विपर्यासे विपर्ययः ॥
शुक्ले गर्भाश्च निष्पन्नाः कृष्णे वर्षन्ति वै सदा ॥
आषाढे चैव संक्रान्तौ यदि वर्षति माधवः।
व्याधिरुत्पद्यते घोरा श्रावणे शोभनं तथा ॥
आषाढे स्वातिनक्षत्रे जलं पातयते यदि।
तदाऽभ्रं विद्युदम्भो वा नदीदूरे गृहं कुरु ॥

१. गुरुसंहिता। स० भ० पु० पाण्डुलिपिसंख्या ३४७२५। पृ० ३०-४०।

आषाढे तु यदा मासे द्वादशीप्रतिपद्दिने ।
पूर्णिमायां यदावऽश्यं शुभो वातः प्रवाति च ॥
सर्वं चैव भवेदन्नं देवो वर्षति भूरिशः ॥
आषाढे सूर्यतः पृष्ठे भौमो गच्छति वृष्टिकृत् ।
देवो वर्षति बह्वम्बु अत्यन्तान्नं च जायते ॥
वर्षाकाले त्रिमासेषु नक्षत्रं वर्धते स्फुटम् ।
तिथिश्च क्षीयते तर्हि शुभकालः सदा भवेत् ॥
सन्ध्याकाले स्निग्धा दण्डतडिन्मत्स्यपरिधिपरिवेषाः ।
सुरपतिचापेनावृतरविकिरणाश्चाशु वृष्टिकराः ॥
प्रभाते पश्चिमेन्द्रस्य धनुश्च यदि दृश्यते ।
वारुणैश्चैव नक्षत्रैः शीघ्रं वर्षति माधवः ॥

अत्र वारुणं नक्षत्रमण्डलं तु—

[1]आश्लेषा चैव मूलञ्च पूर्वाषाढा तथैव च ।
रेवती वारुणं रौद्रं अहिर्बुध्न्यं तथैव च ॥
वारुणं तद् विजानीयाद्……………॥ इति ॥

**गर्गोक्तानि आषाढमासे वृष्टिगर्भपर्यवेक्षणानि—**

[2]आषाढे तु घटी षष्ठ्यां मासद्वादशनिश्चयः ।
पञ्चनाडी भवेन्मासः षष्ठ्या वर्षविनिर्णयः ॥
सर्वरात्रं यदाऽप्राणि वातः पूर्वोत्तरो यदि ।
वर्षेत्तत्र कणाः पुष्टाः जायते जगदीप्सितम् ॥
यदि नाभ्रस्य लेशोऽपि वातः पूर्वोत्तरो न हि ।
न वर्षते तदा मेघो दुष्टकालो भवेदिह ॥
यत्र मासविभागे च निर्मलं दृश्यते नभः ।
तत्र हानिस्त्वनावृष्टिर्विज्ञेयं गर्गभाषितम् ॥

१. अत्रैवोद्धृतम् ॥
२. उक्तस्थलेस मुद्धृतम् ॥

यदाभ्रं पञ्चनाडीषु वायुः पूर्वोत्तरो भवेत् ।
तत्र मासे भवेद्वृष्टिः पवनाभ्रादिमानतः ॥
वृष्ट्यादिसहितैरभ्रैः पूर्णिमा सुखदायिनी ॥
दिनरात्रिविभागेन यदाभ्राणि भवन्ति हि ।
तस्मिन् काले ध्रुवं वृष्टिर्ऋतुनाडीप्रमाणतः ॥
येषु मासेषु ये दग्धा गर्भाः पौषादिसम्भवाः ।
तद्रात्रौ पञ्चनाडीषु चन्द्रो भवति निर्मलः ॥
पौषादिसम्भवो गर्भो ध्रुवमुत्पातसम्भवः ।
सिताषाढीदिनं सर्वं द्रष्टव्यं वृष्टिहेतवे ॥
यद्याषाढीदिने रात्रौ वाताभ्रादि शुभं भवेत् ।
तदा गर्भाः शुभा ज्ञेयाः शीतकालेऽपि धीमता ॥
एकमेव दिनं प्रेक्ष्य कालनिष्पत्तिहेतवे ।
अष्टयामाभ्रवातैश्च वर्षं यावत्तदा शुभम् ॥
आषाढी पूर्णिमारात्रौ यदि चन्द्रो न दृश्यते ।
चतुरोऽपि तदा मासान् जलं वर्षति माधवः ॥
आषाढी पूर्णिमारात्रौ यदि चन्द्रोऽपि निर्मलः ।
प्रजाः प्रपीडिताः सर्वा दुर्भिक्षं रौरवं भवेत् ॥
यदि तत्रामलश्चन्द्रः परिवेषयुतोऽथवा ।
तदा जगत् समुद्धर्तुं शक्रेणापि न शक्यते ॥
आषाढ्यां भास्करास्ते सुरपतिककुभो वाति वातः सुवृष्टिः ॥
शस्यध्वंसं प्रकुर्याद् यदि दहनदिशो मन्दवृष्टिर्यमेन ।
नैर्ऋत्यां मध्यशस्यं वरुणदिशि जलं वायुना वायुकोपः ।
कौवेर्यां शस्यपूर्णा भवति वसुमती तद्वदीशानवाते ॥
आषाढ्यां पूर्ववातेन सर्वशस्या च मेदिनी ।
आषाढ्यामग्निवातेन अस्थिशेषा मही भवेत् ॥
आषाढी पौर्णमास्यां तु दक्षिणो यदि मारुतः ।
तदा सुभटकोटीनां मही पिबति शोणितम् ॥

आषाढ्यां नैर्ऋतो वायुर्यदि तत्र प्रदृश्यते ।
विक्रयित्वा तदा सर्वं कर्तव्यो धान्यसङ्ग्रहः ॥
आषाढ्यां वारुणे वाते वृष्टिः सस्यं भवेद् ध्रुवम् ।
उत्तरे मारुते लोका गीतवाद्यशुभैर्युताः ।
ऐशाने मारुते वाति समर्घं प्रचुरं भवेत् ॥
आषाढ्यां पौर्णमास्यां तु ईशानो मारुतो भवेत् ।
अस्तं गच्छति शीतांशौ शस्यसम्पत्तिरुत्तमा ॥
यावद् हंससमा मेघा यावदग्निसमो रविः ।
यावत्कौवेरको वायुस्तावन्मेघः प्रवर्षति ॥
यावत्काकोदरा मेघा यावच्चन्द्रसमो रविः ।
यावच्च नैर्ऋतो वायुस्तावन्मेघो न वर्षति ॥
शुचौ कृष्णचतुर्थ्यां तु तुषारानपि पातयेत् ।
जलपक्षे तदा सर्वं शस्यं भवति भूतले ॥
शुचौ कृष्णचतुर्थ्यां चेदभ्रैर्भास्करमण्डले ।
न वर्षन्ति तदा मेघास्तदा करतरं (कष्टतरं) जलम् ॥
वृत्तायामाषाढ्यां कृष्णचतुर्थ्यामजैकपादर्क्षे ।
यदि वर्षति पर्जन्यः प्रावृट् शस्ता न चेत्ततः ॥
ततो भाद्रपदा मन्ये यत्र देवो न वर्षति ।

मेघमालाग्रन्थेऽत्र 'न तां भाद्रपदा'मिति पाठान्तरं, तत् समीचीनं शुद्धञ्च ।

आषाढ कृष्णपक्षे च चतुर्थी पञ्चमी तथा ॥
अष्टमीसप्तमी चैवामावास्या प्रतिपद्यदि ।
तत्र वृष्टौ ............. गर्भा न संशयः ॥
अभ्राणि पीतवर्णानि कृष्णवर्णानि पार्वति ।
पश्चिमे चैव सन्ध्यायां वासुदेवि भवन्ति चेत् ॥
सद्य एव भवेद् गर्भो वर्षते नात्र संशयः ।
आषाढे दशमी कृष्णा दुर्भिक्षाय सरोहिणी ॥
एकादशी च मध्यस्था द्वादशी कालभञ्जनी ॥

**लोकोक्तिषु आषाढमासीयवृष्टिगर्भपर्यवेक्षणानि —**

'अद्रा जो बरसे नहीं मृगशिर पौन न जोय ।
तो जानौ ये भड्डरी वर्षा बूदं न होय ॥
धुर आसाढी बिज्जु की चमक निरन्तर होय ।
सोमां सुकरां सुरगुरां तो भारी जल होय ॥
सुदि आसाढ़ की पंचमी गरज घमघमो होय ।
तो यों जानो भड्डरी मधुरी मेघा (अच्छी वृष्टि) जोइ ॥
सुदि आषाढ़ नौमी दिवस बादर झीनो चन्द ।
जानै भड्डर भूमि पर मानो होय अनन्द ॥
आसाढ़ी पूनो दिना बादर झीनो चन्द ।
सो भड्डर जोसी कहै सकल नरा आनन्द ॥
आसाढ़ी पूनौ दिना गाज बीजु बरसन्त ।
नासै लच्छन काल को, आनंद मानो सन्त ॥
आषाढ़ मास आठैं अधिकारी,
जो निकले चन्दा जलधारी ।
चन्दा निकले बादल फोड़,
साढ़े तीन मास वर्षा योग ॥
आगे रवि पीछे चले, मङ्गल जो आसाढ़ ।
तो बरसै अनमोल ही, पृथ्वी आनंद बाढ़ ॥
आसाढ़ मास पूनौ दिवस, बादल घेरे चन्द ।
तौ भड्डर जोसी कहैं, होवै परम अनन्द ॥
कृष्ण आसाढ़ी प्रतिपदा जो अम्बर गरजन्त ।
छत्री छत्री जूझिया, निहिचै काल पड़न्त ॥
नवैं आसाढ़ै बादलो जो गरजे घनघोर ।
कहै भड्डरी जोतिसी, काल पड़ै चहु ओर ॥

---

१. घाघ और भड्डरी की कहावतें । पृ० ७५, ८०, ८१, ८२, ९१, ९२, ९६, १०४ ॥

चित्रा स्वाति विसाखड़ो, जो बरसै आसाढ़ ।
चालो नरां विदेसड़े परिहै काल सुगाढ़ ॥
आसाढ़ी पूनौ दिना, निर्मल ऊगे चन्द ।
पीय जाव तुम मालवै, अटठै छै दुख दन्द ॥
धुर आसाढ़ की अष्टमी, ससि निर्मल जो दीख ।
पीव जाइके मालवा, मांगत फिरिहैं भीख ॥
न गिनु तीन सौ साठ दिन, ना कर लग्न विचार ।
गिनु नौमी आसाढ़ बदि, होवै कौनउ वार ॥
रवि आकाल, मङ्गल जग डगै, बुध समौ समभावो लगै ।
सोम सुक्र सुरगुरु जो होय, पुहुमी फूल फलन्ती जोय ॥

**तथा च —**

[1]पुष्य पुनर्वसु भरे न ताल ।
तौ पुनि भरिहैं लौटि असाढ़ ॥
अद्रा चौथ (आगे चार नक्षत्रों में वृष्टि) मघा पञ्चक ॥
आसाढ़ बयार चलै ईसाना ।
ऊँची खेती करौ किसाना ॥
आवत अदरा न दियो, जात न दीनौ हस्त ।
ये दोनो पछितायँगे पाहुन और गृहस्थ ॥
अदरा गये तीन गये सन-साठी-कपास ॥
आदि न बरसे अद्रा, हस्त न बरस निदान ।
कहै घाघ सुन भड्डरी, भये किसान पिसान ॥
पूनौ परिवा असाढ़ गाजे, तौ दिन बहत्तर बाजे ॥
वायु चलैगी पुरवा, पियौ माड़ का कुरवा ॥
वायु चलेगी उत्तरा, तौ माड़ पियैंगे कुत्तरा ॥

—०*०—

१. घाघ और भड्डरी की कहावतें । उक्त प्रकाशने । पृ० ३६-४१, ५५ ॥

# श्रावणे वृष्टिगर्भादीनां वृष्टिनिमित्तानां पर्यवेक्षणम्

❀

## पराशरोक्तानि श्रावणमासीयवृष्टिगर्भपर्यवेक्षणानि—

प्रथमं तावत्पराशरोक्तानि श्रावणमासीयवृष्टिगर्भलक्षणादीनि वर्ण्यन्ते। तथा हि[1]—

रोहिण्यां श्रावणे मासि यदि वर्षति वासवः।
तदा वृष्टिर्भवेत्तावद्यान्नोत्तिष्ठते हरिः॥
कर्कटे रोहिणी ऋक्षे यदि वृष्टिर्न जायते।
तदा पराशरः प्राह हा! हा! लोकस्य का गतिः॥
श्रावणे मासि रोहिण्यां न भवेद् वर्षणं यदि।
विफलारम्भसंक्लेशास्तदा स्युः कृषिवृत्तयः॥

क्वचिदधिकः पाठः—

श्रावणे प्रथमे पक्षे पूर्वाभाद्रपदेषु च।
चतुर्थ्यां यदि वर्षेत तदा वर्षति वासवः॥
पुरोवातहते ग्रीष्मे श्रावणे वाऽपि चैव हि।
मेरुर्दर्शयते शृङ्गं जलधिः शुष्यते तदा॥
पाश्चात्यः कर्कटे वाऽपि प्राच्यः कन्यां गते रवौ।
सिंहे निर्वातितामेति जलपूर्णा मही भवेत्॥
दिवा जलधरैश्छन्नं रात्रौ च निर्मलं नभः।
शोषमेति तदा पृथ्वी नात्र कार्या विचारणा॥

## नारदोक्तानि श्रावणमासीयवृष्टिगर्भलक्षणानि—

श्रावणे शुक्लसप्तम्यां यदि मेघः प्रवर्षति।
तदा प्रजाभिनन्दन्ति धनधान्याकुला धरा॥

---

१. कृषिपराशरः। पूर्वोक्तप्रकाशने पृ० १७। श्लोकि० ६२-६४। अत्रैव टिप्पणी॥
२. मयूरचित्रकम्। स० भ० पु०। पाण्डुलिपि सं० ३४३३२। पृ० १२। श्लो० ८४-९०॥

श्रावणे कृत्तिकायाश्च यदि मेघः प्रवर्षति ।
तदा जलार्णवा पृथ्वी धनधान्याकुलाः प्रजाः ॥
चित्रा-स्वातिविशाखासु यदि मेघो न वर्षति ।
श्रावणे च तदा पृथ्वी वारिसस्यविवर्जिता ॥
सप्तम्यां श्रावणे मासि स्वातियोगे च वर्षति ।
निष्पत्तिः सर्वसस्यानां भवन्ति सुखिनः प्रजाः ॥
नभस्यस्तङ्गते भानौ सप्तम्यां शुक्लपक्षके ।
दृश्यते न च पर्जन्यस्तदा मेघो न वर्षति ॥
श्रावणस्य सिते पक्षे पूर्वभाद्रपदासु च ।
चतुर्थ्यां जलपातः स्यात् तदाऽप्येकार्णवा मही ॥
श्रवणर्क्षे पौर्णमास्यां यदि मेघः प्रवर्षति ।
तस्मिन् काले सुभिक्षं स्यात् पृथ्वी स्यादन्नसङ्कुला ॥

**मेघमालाग्रन्थे वर्णितानि श्रावणमासीयवृष्टिगर्भलक्षणानि—**

पूर्ववदेवात्रापि पाण्डुलिपिभाषा बहुशो व्याकरणनियमानुपेक्ष्य वर्तते । तथा हि—

[१]सप्तम्यां श्रावणे द्रुवि यदास्तं व्रजते रविः ।
न वृष्टिर्यदि पर्जन्याज्जलाशां मुञ्च सर्वथा ॥
चित्रास्वातीविशाखासु यस्मिन् काले न वर्षति ।
तन्मासे निर्जला मेघा यदि वर्षत्यवर्षति ॥
चित्रास्वातीविशाखासु श्रावणे नो जलं यदि ।
तदा जलादिकं दुःखं सङ्कष्टमपि सेवनम् ॥
श्रावणे कृष्णपक्षे वा पूर्वाभाद्रपदा भवेत् ।
निष्पत्तिः सर्वसस्यानां प्रजा च निरुपद्रवा ॥
श्रावणे शुक्लसप्तम्यामस्तङ्गच्छति भास्करे ।
न वृष्टिर्यदि पर्जन्याज्जलाशां मुञ्च सर्वथा ॥

---

१. मेघमाला (स० भ० पु० पाण्डुलिपि-संख्या ३७२०२) पृ० ४५-४६ । श्लो० १-१८ ॥

श्रावण्यां तु अमावास्यां गर्भमुत्पद्यते तदा ।
उत्तरे कृष्णमेघः स्यात्पूर्वे देवि तथैव च ॥
श्रावणीपूर्णमास्यां तु श्रवणर्क्षे जलं भवेत् ।
सुभिक्षं च समादेश्यं तस्मिन् वर्षे न संशयः ॥
श्रावणे मासि सङ्क्रान्तौ यदा वर्षति माधवः ।
बहुसस्या भवेत्पृथ्वी प्रजासौख्यमविग्रहः ॥
श्रावणी पूर्णिमायां तु यदीन्दुग्रहणं भवेत् ।
घृतं तैलं तथा धान्यं सङ्ग्राह्यं तु विचक्षणैः ॥
श्रावणे शुक्लसप्तम्यां दशम्येकादशीदिने ।
पूर्णमासी द्वितीयादि यावद् भवति पञ्चमी ॥
मध्याह्ने जलसम्भूते सन्ध्याकालेषु वर्षति ।
पश्चिमे दिवसे भागे जायते नात्र संशयः ॥
त्रिरात्रं वर्षते मेघः प्रभाते विमलं भवेत् ।
अमावास्यां भवेच्चैव श्रावणे परमेश्वरि ॥
गर्भमुत्पद्यते तस्मिन्नुत्तरे कृष्णमालिका ।
भवेद्धि पर्वताकारं धूम्रवर्णं सुरेश्वरि ॥
पीतवर्णो यदा मेघः सन्ध्याकालेषु जायते ।
सविद्युतो भवेद् वृष्टिः शुभं मरुद्भिर्युतम् ॥
सार्कश्चन्द्रनभश्छन्नं धारणा शुभ उच्यते ।
मौक्तिकं शंखवर्षासु शुभवायुक्रिया प्रिये ॥
पक्षिभिः सुखदा वाचः क्रीडया सजलादिषु ॥

अत्रान्तिमश्लोके पाठस्य त्रुटिपूर्णत्वादाशयोऽस्पष्टः ।

**वराहमिहिरोक्तानि श्रावणे वृष्टिगर्भपर्यवेक्षणानि—**

[1]वृत्तायामाषाढ्यां कृष्णचतुर्थ्यामजैकपादर्क्षे ।
यदि वर्षति पर्जन्यः प्रावृट् शस्ता न चेन्न ततः ॥

१. बृहत्संहिता । आषाढीयोगाध्यायः श्लो० १४ ॥

**गुरुसंहिताग्रन्थे वर्णितानि श्रावणमासीयवृष्टिगर्भलक्षणानि—**[1]

चित्रा-स्वाती-विशाखासु श्रावणे चेन्न वर्षति ।
त्यक्त्वाऽऽवासं तदा दूरे नदीमध्ये गृहं कुरु ॥
यदाऽऽषाढे न वृष्टोऽसौ तदा तु चकितो जनः ।
भविष्यति वरो योगः श्रावणे सप्तमीदिने ॥
श्रावणे शुक्लसप्तम्यामस्तङ्गच्छति भास्करे ।
न दृष्टो यदि पर्जन्यो जलाशां मुञ्च सर्वथा ॥
श्रावणे शुक्लपक्षे चेत् स्वातियोगे जलं बहु ।
निष्पत्तिः सर्वशस्यानां प्रजाश्च निरुपद्रवाः ॥
श्रावणे कृष्णपक्षे तु पूर्वभाद्रपदासु च ।
चतुर्थ्यां यदि वृष्टिः स्यात्तदा वर्षति वारिदः ॥
श्रावणस्य त्वमायां चेद् गर्भ उत्पद्यते ध्रुवम् ।
उत्तरे कृष्णमेघाश्च पूर्वस्यां तु तथैव च ॥
श्रावण्यां पौर्णमास्यां तु श्रावणे चेज्जलं भवेत् ।
शुभं सर्वं समादेश्यं तस्मिन् वर्षे न संशयः ॥
अमायां चेद् भवेद् देवि श्रावणे गर्भसम्भवः ॥
गर्भश्चोत्पद्यते तस्य चोत्तरे कृष्णमालिका ॥
भवेच्च पूर्वदिग्भागे धूम्रवर्णो भवेत् क्वचित् ।
मेघाश्च सजलाश्चैव पीतकृष्णा भवन्ति हि ॥
अस्तमये यदा देवि सन्ध्याकाले च दृश्यते ॥
अर्धरात्रे गते वृष्टिः प्रभाते विमले तथा ॥ इत्यादि ॥

**लोकोक्तिषु श्रावणमासीयवृष्टिगर्भलक्षणादि—**

[2]सावन पहिली चौथ में जो मेघा बरसाय ।
तौ भाखै यों भड्डरी साख सवाई जाय ॥

---

१. गुरुसंहिता । स० भ० पु० पाण्डुलिपिसंख्या ३४७२५ । पृ० सं० ४०–४१ ॥
२. घाघ और भड्डरी की कहावतें । पृ० ८२, ८३, ८४, ९३, ९४, ९५, १०४, १०५ ॥

सावन शुक्ला सत्तमी छिपि कै ऊगै भान ।
तब लगि देव बरीसिहैं जब लगि देव उठान ॥
सावन केरे प्रथम दिन उगत न दीखैं भान ।
मास चार बरसैं जलद या को है परमान ॥

सावन बदी एकादशी बादल ऊगै सूर ।
तो यों भाखै भड्डरी घर-घर बाजै तूर ॥
तीतर बरनी बादरी रहै गगन पर छाय ।
कहै डंक सुन भड्डरी, बिन बरसे ना जाय ।
सावन पछिवा भादौं पुरवा, आसिन बहै ईसान ।
कातिक कन्ता सींक न डोलै, गाजे सबै किसान ॥
सावन ऊषम भादौं जाड़, वर्षा मारै ठाढ़ कछाड़ ॥
सावन पहली पञ्चमी, गरभै ऊदै भान ।
बरखा होसी अति घनो, उंचो जानो धान ॥
महँग नाज अरु अल्प जल, विरला बिलसै कोइ ॥
सावन कृष्ण एकादशी गरजि मेघ घहरात ।
तुम जावो पिय मालवै हम जावें गुजरात ॥
सावन शुक्ला सप्तमी चन्दा छिटिक करै ।
की जल देखौ कूप में, की तिय सीस धरै ॥
सावन कृष्णपक्ष में देखो, तुल को मंगल होय विसेखो ।
कर्क राशि पर गुरु जो जावै, सिंह राशि में शुक्र सोहावै ।
ताल सो सोखे बरसै धूर, कहूँ न उपजै सातौ तूर ॥
सावन उजरे पांख में जो ये सब दरसाय ।
दुन्द होय छत्री लड़ै भिड़ै भूमिपति राय ॥
सावन शुक्ला सप्तमी उगत जो दीखै भान ।
या जल मिलि है कूप में या गंगा अस्नान ॥
सावन शुक्ला सत्तमी जो बरसै अधिरात ।

तू पिय जावो मालवा हम जावैं गुजरात ॥
चित्रा स्वाति विसाखहूं सावन नहिं बरसन्त ।
हाली अन्ने सङ्ग्रहौ दूनौ मोल करन्त ॥
करक जु भीजै काँकरो सिंह अभीनो जाय ।
ऐसा बोलै भड्डरी टीड़ी फिरि फिरि खाय ॥
सावन बदी एकादशी जेती रोहिणी होय ।
तेतो समया ऊपजै चिन्ता करौ न कोय ॥
सावन बदी एकादशी जितनी घड़ी क होय ।
तितनो संवत निपजै चिन्ता करौ नै कोय ॥
सावन शुक्ला सत्तमी जो गरजै अधिरात ।
बरसै तौ सूखा पड़ै नाहीं समौ सुकाल ॥

**तथा च —**

पुष्य पुनर्वसु भरे न ताल ।
तौ फिर भरिहैं अगली साल ॥
सावन मास बहै पुरवाई ।
बरधा बेचि बिसाहौ गाई ॥
सावन शुक्ला सत्तमी गगन स्वच्छ जो होय ।
कहै घाघ सुन भड्डरी पुहुमी खेती खोय ॥
सावन क पछिवां दिन दुइ चार ।
चूल्ही के पीछेउ उपजै सार ॥
सावन सुक्र न दीखै, निहचै पड़ै अकाल ।
सावन शुक्ला सत्तमी उगत न दीखै भान ॥
तब लगि देव बरीसिहैं, जब लगि देव बिहान ॥
सावन पुरवाई चलै भादौं में पछियाउ ॥

१. घाघ और भड्डरी की कहावतें । उक्त प्रकाशने पृ० ३४, ३७, ३९, ४१, ७२ ७३, १०० ॥

कन्त डंगरवा बेंचि कै लरिका जाय जियाउ ॥
सावन सूखा स्यारी (खरीफ नष्ट) ॥
सावन सूखे धान (अच्छा हो) ॥



## भाद्रे वृष्टिगर्भादीनां वृष्टिनिमित्तानां पर्यवेक्षणम्



**पराशरोक्तानि भाद्रमासीयवृष्टिगर्भलक्षणानि—**

[1]सिंहे च भौमवारे च पूर्वफल्गुनि ऋक्षके ।
व्यतीपाते च नन्दायां कन्यायां वर्षयेद् रविः ॥

**नारदोक्तानि श्रावणे वृष्टिगर्भलक्षणानि —**

[2]नभस्ये च द्वितीयायां प्रहरे च तृतीयके ।
सौम्याशायां घना दृष्टास्तदा स्युः सुखिनः प्रजाः ॥
यदा भाद्रपदे मासि सङ्क्रान्तौ जलवर्षणम् ।
तदा भवन्ति रोगाश्च प्राणिनाञ्चाश्विने भयम् ॥

**मेघमालाग्रन्थे वर्णितानि भाद्रमासीयवृष्टिगर्भलक्षणानि —**

चतुर्थी शुक्लपक्षस्य पञ्चमी चैव सुन्दरि ।
सप्तमी चाष्टमी चैव पूर्णिमायां तु जायते ॥
एकत्रसन्धिका चैव भवेत्पर्वतमालिका ॥
दशपञ्च दिनं देवि एता हि तिथयस्तथा ।
गर्भश्च नात्र सन्देहो भवेत्पर्वतमालिका ॥

---

१. कृषिपराशरः । पृ० १७ । टिप्पण्याम् ॥
२. मयूरचित्रकम् । स०भ०पु० पाण्डुलिपि सं०३४३३२ । पृ०-१२ श्लो०६३ ६६ ॥
३. मेघमाला । सं० भ० पु० पाण्डुलिपि संख्या ३७२०२ । पृ० ४७ । श्लो० १-८ ॥

इत्येवं कथितं देवि यादृशं गर्भलक्षणम् ।
एकमेघार्णवा चैव पृथ्वी भाद्रपदे भवेत् ॥

मासि भाद्रपदे देवि! सङ्क्रान्तौ यदि वर्षति ।
बहुरोगप्रदा प्रोक्ता आश्विने नैव शोभना ॥

यदा भाद्रपदे मासि प्रतिपद् दशमीतिथौ ।
सप्तमी पूर्णिमा देवि नवमी च यथाक्रमम् ॥

तदा मेघश्च पश्यामि पश्चिमां दिशमाश्रितम् ।
तावद् वर्षति सततं बहूदकं विनिर्दिशेत् ॥

## गुरुसंहिताग्रन्थे वर्णितानि भाद्रे वृष्टिगर्भलक्षणानि—

गुरुसंहिताग्रन्थेऽपि विषयोऽयं विस्तरेण वर्णितो दृश्यते —

[1]मासि भाद्रपदे प्राप्ते सङ्क्रान्तौ यदि वर्षति ।
बहुरोगास्तदा प्रोक्ता आश्विने चैव शोभनम् ॥

चतुर्थ्यां शुक्लपक्षे तु पञ्चम्याञ्चैव सुन्दरि ।
सप्तमी चाष्टमी चैव पूर्णिमा चैव जायते ॥

एकत्र संघटश्चैवं भवेत्पर्वतमालिका ।
पञ्चसप्तदिनान्येव एतानि कथितं तव ॥

गर्जते नात्र सन्देहो वर्षते सप्तरात्रकम् ।
एवमेकार्णवा चैव पृथ्वी भाद्रपदस्य तु ॥
वर्षन्ते निश्चयं मेघा नात्र कार्या विचारणा ॥

यदा भाद्रपदे मासि प्रतिपद्दशमीदिने ।
सप्तम्यां पौर्णमास्यां च नवम्याञ्च यथाक्रमम् ॥

मेघा यदा प्रदृश्यन्ते पश्चिमां दिशमास्थिताः ।
तद्वर्षे सततं चैव बहूदकं विनिर्दिशेत् ॥ इत्यादि ॥

---

१. गुरुसंहिता । पृ० ४१ ॥

**लोकोक्तिषु भाद्रे वृष्टिगर्भलक्षणानि --**

[१]सावन पछिवा भादों पुरवा आसिन बहै इसान ।
कातिक कन्ता सींक न डोलै गाजै सबै किसान ॥
जो पूर्वा (पू० फाल्गुनी) पुरवाई प्रावै ।
झूरी नदिया नाव चलावै ॥
भादों की सुदि पञ्चमी स्वाति संयोगी होय ।
दोनौ शुभ योगै मिलैं मङ्गल बरती लोय ॥
भादौं मासै ऊजरी लखौ मूल रविवार ।
तो यों भाखै भड्डरी उपज भली निरधार ॥

**तथा च —**

[२]भादौं का पछिवा माघ का पाला ।
अद्रा चौथ मघा पञ्चक ॥
सिंह गरजै हथिया लरजै (मन्दवृष्टि) ।
जै दिन भादौं बहै पछार ।
तै दिन पूस में पड़े तुषार ।
भादौं जै दिन पछिवा व्यारी ॥
तै दिन माघे पड़ै तुषारी ।
सावन पुरवाई चलै भादौं में पछियाउ ॥
कन्त डँगरवा बेचि के लरिका जाइ जियाउ ।
मघा के बरसे माता के परसे ॥
भूखा न मांगे फिर कुछ हर से ।
मघा भूमि अघा ॥

---

१. घाघ और भड्डरी की कहावतें । पृ० ८३, ८४, ८५ ॥

२. घाघ और भड्डरी की कहावतें । उक्त प्रकाशने पृ० ३२, ३४, ३९, ४१, ६५, ७२, ९६, १०० ॥

चटका मघा पटकि गा ऊसर ।
दूध भात मा परिगा मूसर ॥
जो कहुं मग्घा बरसै जल ।
सब नाजों में होवै फल ॥
भादों सूखा उन्हारी (रवी) ॥
भादों सूखे गेहूं (अच्छा हो) ॥



## आश्विने वृष्टिगर्भादीनां वृष्टिनिमित्तानां पर्यवेक्षणम्

❀

**नारदोक्तानि आश्विने वृष्टिगर्भलक्षणानि –**

प्रथमं तावन्नारदीये मयूरचित्रके वर्णितानि पर्यवेक्षणानि द्रष्टव्यानि। तथा हि ––

[१]आश्विनस्य त्रयोदश्यां शनिवारो यदा भवेत् ।
यदि सङ्क्रमणं तत्र रवेः सस्याकुला मही ॥
आश्विने स्याच्छनिर्वक्रो बुधो राश्यन्तरं व्रजेत् ।
शुक्रश्चास्तमयं याति तदाऽन्नप्लाविता धरा ॥
शनिराह्वोश्च तत्रैव सञ्चारो जायते यदा ।
तैलसूत्रशणादीनां तदा वाच्या महर्घता ॥
आश्विने शुक्लसप्तम्यामष्टम्यां वारिवर्षणम् ।
तदा सुभिक्षमादेश्यं राजानः शान्तविग्रहाः ॥
यदा चाश्वयुजे मासि दशम्यां प्रतिपत्तिथौ ।
अष्टम्यामम्बरे मेघा वृष्टाः क्षिप्रं जलप्रदाः ॥

---

१. मयूरचित्रकम् । पूर्वोक्तपाण्डुलिप्यां पृ० १२-१३ । श्लो० ९७–१०२ ॥

आदित्यास्तमिते मेघाः पर्वताकारसन्निभाः ।
दृश्यन्ते जलपातः स्यात्तस्मिन्नेव दिने तदा ॥

**मेघमालाग्रन्थे वर्णितानि आश्विने वृष्टिगर्भलक्षणानि—**

[१]सप्तमी चाश्वयुग्मासि सिताऽष्टमी जलान्विता ।
सुभिक्षं तत्र निर्दॆश्यं राजानः शान्तविग्रहाः ॥
यदा चाश्वियुजे मासि प्रतिपद्दशमीषु च ।
तथैवं चैव चाष्टम्यां मेघागमनमम्बरे ॥
क्षिप्रं वृष्टिं विजानीयादग्रे काले भविष्यति ।
आश्विने कथ्यते देवि यादृशं वृष्टिलक्षणम् ॥
सन्ध्याकालेषु ये मेघाः पर्वताकारसन्निभाः ।
आदित्यास्तमनं तत्र अहोरात्रं प्रवर्षति ॥

**गुरुसंहिताग्रन्थे वर्णितानि आश्विने वृष्टिगर्भलक्षणानि—**

[२]तथा चाश्वयुजे मासि प्रतिपद्दशमी तथा ।
तथैव चाष्टमी शुक्ला अम्बरे मेघदर्शनम् ॥
क्षिप्रवृष्टिं विजानीयाद् दुष्टः कालो भविष्यति ।
आश्वयुजस्य मासस्य चतुर्थी पञ्चमी तथा ॥
वर्षा गर्भहीना च शास्त्रदृष्टं न संशयः ॥

**लोकोक्तिषु आश्विनमासीयवृष्टिगर्भलक्षणानि—**

[३]सावन पछिवा भादौं पुरवा आसिन बहै इसान ।
कातिक कन्ता सींक न डोलै गाजैं सबै किसान ॥
उत्तरा उत्तर दै गयो, हस्त गयो मुखमोरि ।
भली बिचारी चित्तरा परजा लेइ बहोरि ॥

---

१. मेघमाला । पूर्वोक्तपाण्डुलिप्यां पृ० ४७ । श्लो० १-४ ॥
२. गुरुसंहिता । पृ० ४१ ॥
३. घाघ और भड्डरी की कहावतें । पृ० ८३, ८४ ॥

तथा च—

[1]चढ़त जो बरसै चित्रा, उतरत बरसै हस्त ।
कितनौ राजा डांड़ लै हारै नहीं गृहस्त ॥

हथिया बरसै चित्रा मडराय ।
घर बैठे किसान सुख पाय ॥

हथिया पूँछ डोलावै । ( अन्तवृष्टिः ) ।
घर बैठे गेहूँ आवै ॥

आवत अदरा ना दियो, जात न दीनो हस्त ।
ये दोनों पछितायँगे, पाहुन और गृहस्त ॥
हथिया बरसै तीन होय, साठी सक्कर मास ॥

हथिया बरसे तीन जाय, तिल्ली कोदौ कपास ॥
हथिया गये सब गये, आगिल पाछिल मास ॥

आदि न बरसै आद्रा, हस्त न बरस निदान ।
कहै घाघ सुन भड्डरी भये किसान पिसान ॥



१. घाघ और भड्डरी की कहावतें । उक्तप्रकाशने । पृ० ३३, ३४, ३५, ४१ ॥

# चतुर्थं प्रकरणम्

वृष्टिमानम्, वृष्टेरानुकूल्यप्रातिकूल्यविचारः, अनावृष्टौ वृष्टिप्रवर्तनोपचाराः,
प्राच्यभारतीयर्तुविज्ञानस्येतिहासः,
निबन्धस्य निष्कर्षाः, उपलब्धयः, उपसंहारश्च ।



### वृष्टिमान विवेचनम्—

कस्मिंश्चित् संवत्सरे वृष्टिकाले कियती वृष्टिर्भविष्यतीत्यस्मिन् विषयेऽपि प्राच्यैर्महर्षिभिराचार्यैश्च गभीराणि गवेषणानि कृतानि । विषयेऽस्मिन् प्राच्यानां केचन विचारास्तावदत्रोपन्यस्यन्ते । तथा हि—

### वृष्टिमान-परिमाणानि—

प्राच्यानां वृष्टिमान-परिमाणानि पल-आढक-द्रोणाख्यान्यभूवन्, तदेतेषां परिचयस्तावदत्रोपन्यस्यते ।

### पराशरमते द्रोणाढकपरिमाणे—

यद् वृष्टिकाले वृष्टिजलेन विंशाङ्गुलानाहं द्विचतुष्काङ्गुलोच्छ्रितञ्च पात्रं पूरितं स्यात्तदा आढकमिता वृष्टिर्ज्ञेया । तथा हि—

[1]समे विंशाङ्गुलानाहे द्विचतुष्काङ्गुलोच्छ्रिते ।
भाण्डे वर्षति सम्पूर्णं ज्ञेयमाढकवर्षणम् ॥ इति ॥

द्रोणपरिमाणं पुनश्चतुर्णामाढकानामित्यपि महर्षिणा कथितम् । तथा हि—

[2]आढकाश्चतुरस्ते द्रोणमपां विन्द्यात्प्रमाणतः ॥ इति ॥

### वराहमिहिरवर्णिते पलाढकपरिमाणे—

प्राच्यानां महर्षीणां मतान्यनुसृत्य वराहमिहिराचार्येण स्वीये बृहत्संहिताग्रन्थे वृष्टिमापकपरिमाणानि वर्णितानि । आचार्येणोक्तं यद् हस्तमितनाहे कुण्डके यदा

१. बृहत्संहितायाम् गर्भलक्षणाध्याये । ३२ तमश्लोकटीकायां भट्टोत्पलेनोद्धृतम् ॥
२. अत्रैव ॥

पञ्चाशत्पलमितं जलं भवेत् तदा आढकमितं वर्षणं ज्ञेयम्। तथा हि--

[1]हस्तविशालं कुण्डकमधिकृत्याम्बुप्रमाणनिर्देशः।
पञ्चाशत्पलमाढकमनेन मिनुयाज्जलं पतितम् ॥ इति ॥

**पराशरमते भाविवृष्टिमानस्य पूर्वानुमानविधिः —**

[2]युग्माजगोमत्स्यगते शशाङ्के रविर्यदा कर्कटकं प्रयाति।
जलं शताढं हरिकार्मुकेऽर्द्धं वदन्ति कन्यामृगयोरशीतिम् ॥
कुलीरकुम्भालितुलाभिधाने जलाढकं षण्णवतिं वदन्ति।
अनेन मानेन तु वत्सरस्य निरूप्य नीरं कृषिकर्म कार्यम् ॥

**वर्षणे जलमात्राविभागः —**

[3]समुद्रे दशभागांश्च षड्भागानपि पर्वते।
पृथिव्यां चतुरो भागान् सदा वर्षति वासवः ॥

**प्रवर्षणकालिकपर्यवेक्षणेभ्यो भाविवृष्टिमानज्ञानम् —**

प्राच्यानां मते ज्येष्ठमासानन्तरं पूर्वाषाढादिनक्षत्राणां कालः प्रवर्षणकालः कथितः। अस्मिन् काले जातां वृष्टिं दृष्ट्वा भाविनो वृष्टिकालस्य वृष्टेर्मानं ज्ञातुं शक्यते। तथा हि--

**गर्गमते प्रवर्षणकालिकवर्षणाद्[4] भाविवृष्टेः पूर्वानुमानविधिः —**

ज्येष्ठे मूलमतिक्रम्य मासि प्रतिपदग्रतः।
वर्षासु वृष्टिज्ञानार्थं निमित्तान्युपलक्षयेत् ॥
आषाढादिषु वृष्टेषु योजनद्वादशात्मके।
प्रवृष्टे शोभनं वर्षं वर्षाकाले विनिर्दिशेत् ॥
सूर्यसौराहते वाच्यं नक्षत्रे भौमघातिते।

---

१. वृहत्संहिता। प्रवर्षणाध्यायः। श्लो० २ ॥
२. कृषिपराशरः। पृ० ७ श्लो० २७-२८ ॥
३. अत्रैव। श्लो० २६ ॥
४. वृहत्संहिता। प्रवर्षणाध्यायः। श्लो० १, ४, १० उत्पलभट्टकृतायां टीकायामुद्धृतम्।

उत्पातैस्त्रिविधैर्वाऽपि राहुणा केतुनाऽपिवा ॥
अवृष्टिमशुभं विन्द्याद् विपरीते शुभं वदेत् ॥

अत्र प्रवर्षणकालिकपर्यवेक्षणानां विषये प्राच्यानां मतानि परस्परं भिन्नानि सन्ति। अयं मतभेदः स्थानमूलको भवितुमर्हति। ऋषिभिः पर्यवेक्षणान्येतानि भिन्नस्थानेषु कृतानीति प्रतीयते। अस्मिन् प्रवर्षणकाले गर्गमते द्वादशयोजनमिते क्षेत्रे वर्षणं सुवृष्टिं सूचयति। देवलमते तु केवलं दशयोजनमिते क्षेत्रे वर्षणं सुवृष्टिं सूचयति। तथा हि—

**देवलमते सुवृष्टिसूचकं प्रवर्षणकालिकं वृष्टिक्षेत्रम्—**

[1]प्रवर्षणे यदा वृष्टं दशयोजनमण्डलम्।
वर्षाकालं समासाद्य वासवो बहु वर्षति ॥

**कश्यपमते सुवृष्टिसूचकं प्रवर्षणकालिकं वृष्टिक्षेत्रम् —**

कश्यपमतं तु विषयेऽस्मिन् स्पष्टतरं वर्तते। कश्यपमते तत्तद्देशीयं प्रवर्षण-कालिकं वर्षणं तत्तद्देश एव सुवृष्टिं सूचयति। तथा हि—

[2]प्रवर्षणे यथादेशं वर्षणं यदि दृश्यते।
वर्षाकालं समासाद्य वासवो बहु वर्षति ॥

अत्र यथादेशमित्यनेन जाङ्गलानूपमरुसाधारणादिदेशभेदा ग्राह्याः।

**समाससंहितावर्णितं प्रवर्षणकालिकवृष्टेर्भाविवृष्टिमानज्ञानम् —**

अयं विषयः समाससंहितायामपि विस्तरेण वर्णितो विद्यते। अत्र हि प्रवर्षणकालिकानां तत्तन्नक्षत्राणां वर्षणाद् भाविवृष्टिमानस्यानुमानमपि वर्णितम्। तथा हि —

[3]ज्येष्ठस्य पौर्णमासीमतीत्य भूमुद्रया यथा वृष्टे।
आप्याद्यैर्जलमानं मागधमानेन हस्तमिते ॥
दशयुक्ता द्विकृतखतिथिरसाष्टदिग्विषयरामजलतिथिभिः।
तिथिरसरसैश्च विरसाः सदशकृता षड्विहीनाश्च ॥
जलषट्कदशकसहिता जलरसयुक्ताः षड्नाश्च।
विषयतिथिषट्कसहिताश्चाश्विन्यादिषु जलद्रोणाः ॥

---

१. अत्रैव। चतुर्थश्लोकस्य भट्टोत्पलकृता टीका ॥

२. अत्रैव।

३. बृहत्संहिता। प्रवर्षणाध्यायः। श्लो० २ ६,६। टीकायां भट्टोत्पलेनोद्धृतम् ॥

## वराहमिहिरवर्णितं प्रवर्षणकालिकवर्षणाद् वृष्टिमानज्ञानम् —

प्राच्यानां महर्षीणां मतान्याश्रित्य वराहमिहिरेण स्वीये बृहत्संहिताग्रन्थे विषयोऽयं विस्तरेण वर्णितः। तथा हि —

ज्यैष्ठ्यां समतीतायां पूर्वाषाढादिसम्भवृष्टेन।
शुभमशुभं वा वाच्यं परिमाणञ्चाम्भसस्तज्ज्ञैः ॥
येन धरित्री मुद्रा जनिता वा बिन्दवस्तृणाग्रेषु।
वृष्टेन तेन वाच्यं परिमाणं वारिणः प्रथमम् ॥
केचिद् यथाभिवृष्टं दशयोजनमण्डलं वदन्त्यन्ये।
गर्गवशिष्ठपराशरमतमेतद् द्वादशान्न परम् ॥
येषु च भेष्वभिवृष्टं भूयस्तेष्वेव वर्षति प्रायः।
यदि नाप्यादिषु वृष्टं सर्वेषु तदात्वनावृष्टिः ॥
हस्ताप्यसौम्यचित्रापौष्णधनिष्ठासु षोडश द्रोणाः।
शतभिषगैन्द्रस्वातिषु चत्वारः कृत्तिकासु दश ॥
श्रवणे मघानुराधाभरणीमूलेषु दशचतुर्युक्ताः।
फाल्गुन्यां पञ्चकृतिः पुनर्वसौ विंशतिर्द्रोणाः ॥
ऐन्द्राग्न्याख्ये वैश्वे च विंशतिः सार्पभे दशत्र्यधिकाः।
आहिर्बुध्न्यार्यम्णप्राजापत्येषु पञ्चकृतिः ॥
पञ्चदशाजे पुष्ये च कीर्तिता वाजिभे दश द्वौ च।
रौद्रेऽष्टादशकथिता द्रोणा निरुपद्रवेष्वेते ॥

रवि-रविसुत-केतु-पीडिते भे क्षितितनयत्रिविधाद्भुताहते च।
भवति च न शिवं न चापि वृष्टिः,शुभसहिते निरुपद्रवे शिवञ्च ॥[1]

## वार्षिकवृष्टेरानुकूल्यप्रातिकूल्यविचारः —

प्राच्यैर्महर्षिभिराचार्यैश्च यथा भाविनां वर्षणावर्षणादीनां विषये, तथैव वत्सरे वृष्टिविभागस्यानुकूल्यप्रातिकूल्यादिविषयेष्वपि सम्यगालोचितम्। वर्षस्य कस्मिन् भागे कियती कीदृशी च वृष्टिरनुकूला प्रतिकूला वा भवतीत्यस्मिन् विषये प्राच्यानां प्रभूतं ज्ञानमासीत्। इत्थं वृष्टेः कालविभागस्य विस्तृतं विवेचनं कौटली-

१. बृहत्संहिता। प्रवर्षणाध्यायः ॥

यार्थशास्त्रग्रन्थे समुपलभ्यते। आचार्यकौटल्यस्य मते श्रावणप्रोष्ठपदाश्वयुजकार्तिकाख्ये मासचतुष्टये यावती वृष्टिर्भवति तस्यास्तृतीयो भागश्चेच्छ्रावणकार्तिकयोर्वर्षति, द्वौ तृतीयांशौ च प्रोष्ठपदाश्वयुजयोर्वर्षतस्तर्हि वत्सरो वृष्टिदृष्ट्या शोभनो भवति। तथा हि —

**आचार्यकौटल्येन वर्णितोऽनुकूलो वृष्टिक्रमः —**

वर्षत्रिभागः पूर्वपश्चिममासयोः,
द्वौ त्रिभागौ मध्यमयोः सुषमारूपमिति।

**वत्सरेऽनुकूलवृष्टिसूचकानि मासाष्टकनिमित्तानि —**

कौटलीयार्थशास्त्रग्रन्थे सीताध्यक्षप्रकरण एव शोभनवत्सरस्य ज्ञापकानां वर्णनप्रसङ्गे 'तस्योपलब्धिर्बृहस्पतेः स्थानगमनगर्भाधानेभ्यः शुक्रोदयास्तमयचारेभ्यः सूर्यस्य प्रकृतिवैकृताच्चे'त्यादिना वर्णितानां भाविवृष्ट्यादिज्ञापकानां व्याख्यायां श्री टी० गणपतिशास्त्रिमहोदयैः कुतश्चिच्छ्लोकद्वयमुद्धृतं, तत्र मार्गशीर्षादिषु षट्सु मासेषु भाविन्या अनुकूलवृष्टेः सूचकानि लक्षणानि वर्णितानि।

**तथा हि —**

[3]मार्गशिराः सतुषारः, सहिमः पौषः समारुतो माघः।
साभ्रः फाल्गुनमासः सपवनवृष्टिश्च यदि चैत्रः॥
तडिदभ्रानिलविद्युज्जलवृषितो भवति यदि च वैशाखः।
सम्यग् वर्षति मघवान् धारणदिवसेषु वर्षति चेत्॥

प्रसङ्गेऽस्मिन् धारणदिवसा वैशाखकृष्णपक्षस्य प्रतिपदादयश्चत्वारो दिवसा इति बोध्यम्। शोभनवृष्टिक्रम-सूचकानि मासाष्टकनिमित्तानि संस्कृतग्रन्थेषु, प्राचीन-पाण्डुलिपिषु च बहुशो वर्णितान्युपलभ्यन्ते। तथा हि —

**जीवनाथवर्णितानि मासाष्टकनिमित्तानि —**

[4]नक्रार्के तु हिमागमोऽप्यनुदिनं कुम्भे प्रचण्डानिलः।
मीनार्केऽम्बरमण्डले यदि भवेद् धाराधराडम्बरः॥

---

१. कौटलीयार्थशास्त्रेण द्वितीयाधिकरणे। सीताध्यक्षप्रकरणे। १९४२ ईशवीये अनन्तशयनग्रन्थावलिप्रकाशने पृ० २८४॥

२. कौटलीयार्थशास्त्रे। द्वितीयाधिकरणे, सीताध्यक्षप्रकरणे, उक्त प्रकाशने पृ० २८४॥

३. अत्रैव श्रीमूलाटीकायाम्, उक्तप्रकाशने पृ० २८४-२८५॥ कुत्रत्यौ श्लोकाविमौ इति टीकाकृता नोक्तम्॥

४. वनमाला। सं० भ० पु० पाण्डुलिपि सं० ३५३९५। पृ० ७। श्लो० १४।

मेषार्कें करकाः पतन्त्यथ वृषे भानोः प्रचण्डातपः ।
तावद् वर्षति वारिदो भुवि रविः कन्यालये तिष्ठति ॥

गुरुसंहिताग्रन्थे वर्णितानि मासाष्टकनिमित्तानि तावदत्रोपस्थाप्यन्ते—

[1]कार्तिके पुष्यते पुष्पं मार्गे शीतं ततो मतम् ।
पौषे तुषारवातोष्णो नित्यं माघो घनान्वितः ॥
फाल्गुने फलवातः स्याच्चैत्रे किञ्चित्पयो हितम् ।
वैशाखः पञ्चरूपी स्याज्ज्येष्ठो घर्मान्वितः शुभः ॥
मासाष्टकनिमित्तेन चतुष्टयमभीष्टदम् ॥

इत्थं कार्तिकादिषु अष्टसु मासेषु पूर्वोक्तानि लक्षणानि दृष्ट्वा आगामिनि वत्सरे शोभनो वृष्टिक्रमोऽनुमीयते । विपरीतेषु लक्षणेषु तु वत्सरे प्रतिकूला वृष्टिरनुमीयते । अनुकूला वृष्टिः शिल्पवाणिज्यादीनां समेषामपि व्यवसायानां हिताय भवति । प्रतिकूलायां वृष्ट्यां तु सर्वेऽपि शिल्पवाणिज्यादयो व्यवसायाः कुप्रभाविता भवन्ति, व्यवसायिनां महती हानिश्च जायते । अकाले भवा वृष्टिर्हि विविधान् रोगानपि जनयति ।

## कृषिदृष्ट्या शोभनो वृष्टिक्रमः --

कीदृशी कियती च वृष्टिः कृषेरनुकूला भवतीत्यस्यापि कौटिल्याचार्येण सुस्पष्टं विवेचनं कृतम् । वत्सरे वर्षाकाले यदा सप्ताहोरात्राविच्छिन्नवृष्टिकारिणस्त्रयो मेघाः, सान्द्रबिन्दुवर्षिणोऽशीतिर्मेघाः, आतपयुक्ताश्च षष्टिसंख्यका मेघा वर्षन्ति तदा कृष्यर्थं पर्याप्ता अनुकूला च वृष्टिर्ज्ञातव्या । एषा वृष्टिर्लोकहितकरी भवति । यदा च मेघा वातातपयोरसङ्करेण तिष्ठन्तो वर्षन्ति तदा सस्यनिष्पत्तौ सन्देहो न भवति, ग्रैष्मिकं-शारद्यातिरिक्ताख्याः (साम्प्रतं रबी-खरीफ-अधिकेतिकथिताः) तिस्रोऽपि कृषयः सम्यङ् निष्पद्यन्ते च । तथा हि —

[2]त्रयः साप्ताहिका मेघाः, अशीतिः कणशीकराः ।
षष्टिरातपमेघानामेषा वृष्टिः समा, हिता ॥
वातमातपयोगश्च विभजन् यत्र वर्षति ।
त्रीन् कर्षकांश्च जनयंस्तत्र सस्यागमो ध्रुवः ॥

१. गुरुसंहिता । स० भ० पु० पाण्डुलिपिसंख्या ३४७२५ । पृ० २ ॥
२. कौटलीयार्थशास्त्रे । सीताध्यक्षप्रकरणे ।

## अनावृष्टौ वृष्टिप्रवर्त्तनोपचाराः —

ऋतुविज्ञानशास्त्रस्य वैज्ञानिक-पौराणिकपक्षयोः समन्वयात्मकविवेचनावसरे प्रथम-प्रकरण एव मंत्रहवनादिविधीनां वैज्ञानिकः पक्षः स्पष्टीकृतः । प्राच्य-संस्कृत-ग्रन्थेषु वृष्ट्यभावे वृष्टिप्रवर्तनाय मंत्रहवनाद्यात्मका विधयो वर्णिताः सन्ति। प्राच्यपाण्डुलिपिषूपलब्धेषु एवंविधेषु प्रसङ्गेषु प्रायो बहुशः पाठे त्रुटयः सन्ति। एतद्विषयक एकोविधिः सरस्वतीभवनपुस्तकालयस्य [1]मेघमालाग्रन्थपाण्डुलिप्यां द्रष्टुं शक्यते। एवंविधेषु विधिषु मदीया पूर्णा निष्ठा वर्तते परं विधेरस्य प्रयोगात्मकं परीक्षणं मया न कृतमिति तस्योद्धरणमत्र न क्रियते ।

मेघमालाग्रन्थे यो वृष्टिप्रवर्तनविधिर्वर्णितस्तत्र तासु तासु दिक्षु तेषु तेषु स्थलेषु च वर्णितानां मेघानां नामानि मेघप्रकाराणां वर्णनदृष्ट्या महत्त्वमावहन्ति । एतानि नामान्याश्रित्य वैज्ञानिकदृष्ट्या, स्वरूपतो, वृष्टिफलतश्च मेघानां वर्गीकरणं कर्तुं शक्यते। विषयोऽयं प्रयोगपर्यवेक्षणादिभिर्गवेषणमर्हति । यद्यपि भौतिकविचारप्रधाने युगेऽस्मिन् एवंविधानां विधीनां चर्चा उहासास्पदमेव प्रतिभाति; परमाधुनिकैः सम्प्रति कृत्रिमवृष्ट्यर्थं ये प्रयासाः क्रियमाणाः सन्ति तत्राऽपि प्राच्यविधिभिः समानमेव तापस्य कम्पनादीनाञ्च महत्त्वमङ्गीकृतं वर्तते। नूनं विषयोऽयं प्रयोगात्मकं परीक्षणमर्हति ।

## प्राच्यभारतीयर्तुविज्ञानविषये किञ्चिदैतिहासिकम् —

संस्कृतवाङ्मये वैदिकसाहित्यादारभ्य ऋतुविज्ञानस्य प्रचुरा चर्चा कृता विद्यते निदर्शनरूपेण ऋग्वेदस्याष्टममण्डले [2]वृष्टेः, वृष्टिकारणभूतानां मेघमारुतादीनाञ्च वैज्ञानिकानि वर्णनानि द्रष्टुं शक्यन्ते। ग्रन्थेऽस्मिन् प्रथमप्रकरणे विद्युतो वैज्ञानिक-विवेचनप्रसङ्गे ऋग्वेदादुद्धृतं विद्युतो वैज्ञानिकं वर्णनमपि तावद् द्रष्टव्यमस्ति। वैदिकयुगे न केवलं वेदेषु परमुपनिषत्स्वऽपि वृष्ट्यादीनां वैज्ञानिकं विवेचनमुपलभ्यते। प्रस्तुतग्रन्थस्य प्रथमप्रकरणे वृष्टिविवेचनप्रसङ्गे छान्दोग्योपनिषद [3]उद्धृतं वृष्टेर्वैज्ञानिकं वर्णनम् ऋतुविज्ञानशास्त्रस्य तदानीन्तनं विकासं प्रख्यापयति ।

स्मृतिकालेऽपि ऋतुविज्ञानशास्त्रस्य प्रचुरो विकासोऽजायत । स्मृतिकारैर्नारद-कश्यप-गर्ग-वशिष्ठ-पराशर-द्रुहिण-देवल-वज्र-प्रभृतिभिर्महर्षिभिः शास्त्रमेनमधिकृत्य विशिष्टानां ग्रन्थानां रचनाकृता। यद्यप्येते ग्रन्था: सम्प्रति समुपलब्धा न सन्ति परं वराहमिहिरस्य बृहत्संहिताग्रन्थे तत्राऽपि विशेषत उत्पलभट्टस्य टीकायामुद्धृतानि

१. मेघमाला । स० भ० पु० पाण्डुलिपि-संख्या ३७२०२। अ० १०। श्लो० १-२६। पृ० ४८-४९ ॥

२. ऋग्वेदे । अष्टममण्डले । अ० २ । सू० ७ ॥

३. छान्दोग्योपनिषत् ।७।११।१॥ शाङ्करभाष्यम् ॥

नारद गर्गवसिष्ठपराशरादीनां वचनानि ग्रन्थानामेतेषां परिचयमुपस्थापयन्ति । गर्गतनयस्य ऋषिपुत्रस्य कृतीनामुद्धरणानि सूचयन्ति यन्महर्षीणां पुत्रपौत्रपरम्पराऽपि शास्त्रस्यास्य विकासे कृतप्रयासा अवर्तत । उक्तानाम् ऋषीणां मतानि तावद् ग्रन्थेऽस्मिन् पदे पदे उद्धृतानि विद्यन्त इति प्रसङ्गेऽस्मिन् तेषां निदर्शनानि नोद्ध्रियन्ते ।

यथा स्मृतियुगे तथैव पौराणिकयुगेऽपि शास्त्रमिदं सुविकसितमवर्तत । ग्रन्थेऽस्मिन् प्रथमप्रकरणे वृष्टिविवेचनप्रसङ्गे तथा च द्वितीयप्रकरणे वृष्टिज्ञानविधीनां वर्णनप्रसङ्गे भारतीयपञ्चाङ्गानुसारं संवत्सरक्रमानुवर्तिनो वृष्टिज्ञानविधेर्वर्णने ब्रह्मवैवर्त्तपुराणा[1]दुद्धृता अंशाः पौराणिकयुगे जातस्य ऋतुविज्ञानशास्त्रविकासस्य परिचयमुपस्थापयन्ति ।

पुरा न केवलं वैदिकाः, स्मृतिकृतः, पौराणिका वा एव शास्त्रस्यास्य विज्ञातार आसन् परं सज्ञानरूपेण साहित्यसर्जनपराः कवयोऽपि शास्त्रस्यास्य रहस्यैः सुपरिचिता आसन् । विषयेऽस्मिन् कालिदासकृते मेघदूतग्रन्थे संक्षेपेण वर्णितो मेघोत्पत्तिविषयो मेघभेदानां सङ्केतश्च महाकवेस्तदानीन्तनानां जनानाञ्च ऋतुविज्ञानविषयकं गभीरं ज्ञानं परिचाययति । तथा हि—

[2]धूमज्योतिः सलिलमरुतां सन्निपातः क्व मेघः ॥ इत्यादि ॥

अत्रैव पुनः —

[3]जातं वंशे भुवनविदिते पुष्करावर्त्तकानाम् ॥ इत्यादि ॥

अत्रोक्ताः पुष्करावर्तकाद्यो मेघभेदा ग्रन्थेऽस्मिन् प्रथमप्रकरणे मेघविवेचनप्रसङ्गे वर्णिताः सन्ति ।

नारद-गर्गादिभिर्महर्षिभिर्विरचितानाम् ऋतुविज्ञान-शास्त्रग्रन्थानामस्तित्वमीशवीये षष्ठशतकेऽभूदिति वराहमिहिरोक्तेः प्रमाणितं भवति । तथा हि वृष्टिगर्भविवेचनप्रसङ्गे वराहमिहिरेणोक्तम्—

[4]तल्लक्षणानि मुनिभिर्यानि निबद्धानि तानि दृष्ट्वेदम् ।
क्रियते गर्गपराशरकाश्यपवज्रादिरचितानि ॥

इत्थं वराहमिहिरेण स्वग्रन्थस्याधारभूता गर्गपराशरादिभिर्निर्मिता ग्रन्थाः स्वीकृताः । तथैव प्रवर्षणकालिक्या वृष्टेर्विवेचनप्रसङ्गे—

---

१. ब्रह्मवैवर्तपुराणे श्रीकृष्णजन्मखण्डे । २१.तमाध्याये श्रीकृष्णकृतं वृष्टिविवेचनमित्यादि ॥

२. मेघदूते । पूर्वमेघे । श्लो० ५ ॥

३. अत्रैव । श्लो० ६ ॥

४. वृहत्संहिता । गर्भलक्षणाध्यायः । श्लो० २ ॥

[२]केचिद् यथाऽभिवृष्टं दशयोजनमण्डलं वदन्त्यन्ये ।
गर्ग-वशिष्ठ-पराशर-मतमेतद् द्वादशान्न, परम् ॥ इति ॥

इयं वराहमिहिरोक्तिः बृहत्संहिताग्रन्थस्याधारभूतानां मुनिभिर्विरचितानां ग्रन्थानामस्तित्वं प्रमाणीकरोति। अत्र केचिदित्यनेन नारद-कश्यपादीनां ग्रहणं बोद्धव्यम्। तथा हि श्लोकस्यास्य टीकायां भट्टोत्पलेनोद्धृतं कश्यपमतम्—

[३]प्रवर्षणे यथादेशं वर्षणं यदि दृश्यते ।
वर्षाकालं समासाद्य वासवो बहु वर्षति ॥ इत्यादि ॥

ईशवीय-नवमशतकस्यान्तिमभागेऽपि द्रुहिण-नारद-गर्ग-वशिष्ठ-पराशरादिभिर्मुनिभिर्विरचितानां ऋतुविज्ञानशास्त्र-ग्रन्थानामस्तित्वं भट्टोत्पलस्य टीकायामुद्धृतेभ्यो मुनीनामेतेषां मतेभ्यः प्रमाणितं भवति। मतानामेतेषामुद्धरणानि ग्रन्थेऽस्मिन् यथावसरमुपस्थापितानि। वस्तुतस्तु वराहमिहिरस्य मुनिमताश्रितायाः कृतेः महत्त्वं भट्टोत्पलेनैव स्वटीकायां यथावसरं मुनिमतान्युद्धृत्य संवर्धितम्। वराहमिहिरस्य भाषा, शैली च तद्युगानुरूपा प्रायोऽलङ्कृता विद्यते। अलङ्कृता शैली भाषाऽऽडम्बरो वा वैज्ञानिकविषयाणां वर्णने न युज्यते। अतो वराहमिहिरेण वर्णिता वैज्ञानिका विषया भट्टोत्पलस्य टीकां विहाय लोकप्रिया भवितुं नार्हन्ति। भट्टोत्पलेन स्वटीकायां यानि मुनीनां वचनानि विन्यस्तानि तेषां भाषा वर्णनशैली च सर्वथा वैज्ञानिकविषयानुरूपा वर्तते।

ईशवीयदशमशतकादनन्तरं वैदेशिकानां बर्बरतापूर्णैः कृत्यैः संस्कृतवाङ्मये विज्ञानशास्त्रग्रन्थानां दशा शोचनीयतामुपगता। ईशवीययोः सप्तदशाष्टादशशतकयोर्मध्यवर्तिनां विदुषां कृतिभ्यः स्पष्टं सूच्यते यत्तदानीं संस्कृत-वाङ्मये विज्ञानशास्त्रग्रन्थानां दुरवस्था समजायत। प्रसङ्गेऽस्मिन् ऋतुविज्ञानशास्त्रस्य वनमालाग्रन्थकृतो मैथिलविदुषो जीवनाथस्य भावकुतूहल-ग्रन्थारम्भे श्लोक एको द्रष्टव्यः —

[१]धात्रोदितं यवनकर्कशशब्दसङ्गाद्,
आधिव्यथाविदलितं परमं फलं यत् ।
मत्कोमलामलरवामृतराशिधारा-
स्नानं करोतु जगतामपि मोदहेतोः ॥ इति ॥

---

२. अत्रैव । प्रवर्षणाध्यायः । श्लो० ४ ॥

३. उक्तश्लोके भट्टोत्पलकृतायां टीकायामुद्धृतम् ॥

१. भावकुतूहलजातकम् । श्लो० ३ ॥

अस्य विदुषः स्थितिकालोऽस्य वास्तुरत्नावलीग्रन्थादनुमितो भवति। तथा हि—

[1]शाके तर्करसाङ्गचन्द्रमिलिते ( १६६६ ) पक्षे वलक्षेतरे,
चैत्रे मासि भृगोर्दिने स्मरतिथावेषा गता पूर्णताम्।
नानाऽऽचार्यमतं विलोक्य रचिता श्रीवास्तुरत्नावली,
श्रीमन्मैथिलजीवनाथकृतिना दैवज्ञमोदप्रदा॥

विदुषाऽनेन वस्तुरत्नावलीग्रन्थस्य रचनातः प्रागेव ताजिकदर्पण-भावकतूहल-पाराशरीवासना-प्रश्नविभूषणाख्यानां ग्रन्थानां रचना कृतेत्यस्य वनमालाग्रन्थस्य श्लोकादेकस्माज्ज्ञायते। तथा हि—

कृत्वा ताजिकदर्पणं प्रथमतः श्रीजीवनाथः कृती,
रम्यं भावकुतूहलं च परतः पाराशरीं वासनाम्।
चञ्चत्प्रश्नविभूषणं विनिरमादल्पाक्षरामर्थदाम्,
विद्वच्चक्रमनोविनोदजननीं कीलालयोगावलीम्॥[2]

श्लोकेऽस्मिन् वास्तुरत्नावलीग्रन्थस्य चर्चा नास्तीति तस्यानन्तरकृतित्वमनुमीयते। इत्थं श्रीजीवनाथस्य काल ईशवीयाष्टादशशतकस्य पूर्वार्द्धे निश्चितो भवति। मम मते तु संस्कृते ऋतुविज्ञानशास्त्रस्येयमन्तिमा कृतिरस्ति।

अष्टादशेशवीयशतकानन्तरं संस्कृते विज्ञानशास्त्र-ग्रन्थेषु येऽप्यवशिष्टास्तान् प्रति संस्कृत-विदुषां उपेक्षैवावर्तत। कालेऽस्मिन् संस्कृतपण्डिताः प्रायो दर्शन-वेदान्त साहित्य-व्याकरणादिविषयेष्वेव कृतश्रमा अतिष्ठन्। वैज्ञानिकविषयेषु केवलं ज्यौतिषायुर्वेदयोः केषुचिदङ्गेषु संस्कृतविदुषां दृष्टिरवर्तत। कृषिशिल्पादिसम्बद्धा अन्ये विज्ञानविषयास्तु प्राय उपेक्षिता एवासन्। भारते व्यवसायेषु कृषेः प्रामुख्यात् ऋतुविज्ञानशास्त्रस्यापि मुख्यतया कृष्युपयोगित्वमस्ति। कृषिव्यवसायस्य च पराशरस्मृतिसमर्थितत्वेऽपि हिंसादिसम्बद्धत्वात् प्रमुखतया श्रमिकवर्गसाध्यत्वमुपपन्नम्। श्रमिकवर्गस्तु कालेऽस्मिन् प्रायः संस्कृतज्ञानविरहितोऽभूदिति संस्कृतभाषोपनिबद्धम् ऋतुविज्ञानशास्त्रमपि कृषकेभ्यो दूर एवावर्तत। ये केचन शिक्षिताः कृष्यां कृतानुरागास्तेषां संस्कृतस्य प्रौढं परिमार्जितञ्च ज्ञानं नासीत्। अतएव ऋतुविज्ञानसम्बद्धानां कृषकैः प्रयुक्तानां नारदीयमयूरचित्रकमेघमाला-प्रभृतीनां ग्रन्थानां याः पाण्डुलिपयःसम्प्रति समुपलभ्यन्ते तत्र भाषादिसम्बन्धिन्यो बह्व्यस्त्रुटयः सन्ति।

---

१. वास्तुरत्नावलीग्रन्थोपसंहारे॥
२. वनमालाग्रन्थान्ते। श्लो० १५॥

ईशवीयाष्टादशैकोनविंशतितमशतकयोर्मध्ये संस्कृतस्य जनसामान्यसम्पर्के ह्रासं विलोक्य कैश्चित् कृषिशिल्पशास्त्रानुरागिभिः संस्कृतज्ञैर्लोकोपयोगिनां संस्कृतोपनिबद्धानां विज्ञानशिल्पशास्त्राणामनुवादाः तत्तत्क्षेत्राणां भारतीयभाषासु कृताः। तद्यथा बङ्गभाषायां 'खनारवचन' इति-ग्रन्थः, मैथिलभाषायां डाकवचनामृतमितिग्रन्थः, हिन्दी-राजस्थानीभाषयोः घाघभड्डुरकृतयः, कन्नडभाषायां तिरिक्कुरलग्रन्थः, तमिलभाषायां करनपथुग्रन्थः इत्थमेवान्यास्वपि भारतीयभाषासु प्राच्यभारतीयविज्ञानशास्त्रविषयका बह्वो ग्रन्थाः सन्ति।

संस्कृतोपनिबद्धानां प्राच्यवैज्ञानिकग्रन्थानां परिचयाभावे सम्प्रति क्षेत्रीयभाषाणां विद्वांसः संस्कृतानुवादभूतानां ग्रन्थानामेतेषां मौलिककृतित्वं स्वीकुर्वन्ति। तद्यथा हिन्दीभाषायां घाघ-भड्डरयोः कृतयस्तेषां मौलिक्यः कृतयो मन्यन्ते। परं कृतीनामेतासां संस्कृतमूलं सम्प्रत्यप्रकाशितेषु ग्रन्थेषूपलभ्यते। तद्यथा आषाढीपूर्णिमायां वायुगतिमाश्रित्य भाविवृष्ट्यादीनां ज्ञानविषये घाघ-भड्डरयोर्वचनानि, तेषां संस्कृतमूलभूताः प्राच्यग्रन्थानामंशाश्चात्रोदाहरणरूपेणोपन्यस्यन्ते। तथा हि—

**आषाढपूर्णिमायां वायुगतिपर्यवेक्षणसम्बद्धा घाघ-भड्डरयोरुक्तयः—**

[1]आसाढ मास पुन ( पूर्णिमा ) गौना।<br>
धुजा बांधि के देखौ पौना।<br>
जो पै पवन पूरब से आवै।<br>
उपजै अन्न मेघ झरि लावै॥<br>
अगिन कोन जो बहै समीरा।<br>
पड़ै काल दुःख सहै शरीरा॥<br>
दखिन बहै जल-थल अलगीरा।<br>
ताहि समै जूझैं बड़ वीरा॥<br>
नैऋत कोन बूँद ना परै।<br>
राजा परजा भूखन मरै॥<br>
पच्छिम बहै नीक करि जानै।<br>
पड़ै तुषार तेज डर मानौ॥<br>
बायब बह जल थल अति भारी।<br>
मूस उगाह दण्ड बर्स नारी॥

---

१. घाघ और भड्डरी। पृ० १०३ पद्यसंख्या ४१।१९०॥

उत्तर उपजै बहु धन धान।
खेत बात सुख करै किसान ॥

कोन इसान दुंदुभी बाजै।
दही भात भोजन सब गाजै।

तथैव—

[1]आषाढ़ी पूनौ की साँझ।
वायु देखिये नभ के मांझ ॥
नैऋत भई बूँद ना परै।
राज परजा भूखौं मरै ॥
अगिन कोन जो बहै समीरा।
पड़ै काल दुःख सहै सरीरा ॥
उत्तर से जल फूहौं परै।
मूस साँप दोनों अवतरै ॥
पच्छिम समै नीक करि जान्यो।
आगे परै तुषार प्रमान्यो।
जो कहुँ बहै इसाना कोना।
उपजै बिस्वा दो दो दोना ॥
जो कहुँ हवा अकासै जाय।
परै न बूँद काल परि जाय ॥
दक्खिन पश्चिम आधौ समयौ।
भड्डर जोसी ऐसौ भन्यौ ॥

उक्तानां घाघ-भड्डरोक्तीनां संस्कृतमूलं नारदीये मयूरचित्रकग्रन्थे उपलभ्यते। अत्रैकत्र पाठः खण्डितो लिपिकृत्त्रुटिवशाद् भाषाऽनेकत्र त्रुटिपूर्णा संशोधनार्हा च विद्यते। तथा हि—

---

१. घाघ और भड्डरी। पृ० १०४ पद्यसंख्या १६७ ॥

[1]आषाढमासस्य च पौर्णमास्यां
सूर्यास्तकाले यदि वाति वायुः ।
पूर्वस्तदा सस्ययुता च मेदिनी
नन्दन्ति लोका जलदायिनो घनाः ॥
कृशानुवायौ मरणं प्रजानाम्
अन्नस्य नाशः खलु वृष्टिनाशः ।
याम्ये मही सस्यविवर्जिता स्यात्
...परं यान्ति नृपा विनाशम् ॥
नैशाचरो वाति यदाऽत्र वातो
न वारिदो यच्छति वारि भूरि ।
तदा मही सस्यविवर्जिता स्यात्
क्रन्दति लोकाः क्षुधया प्रपीडिताः ॥
आषाढमासे यदि पौर्णमास्यां
सूर्यास्तकाले यदि वारुणोऽनिलः ।
प्रवाति नित्यं सुखिनः प्रजाः स्युः
जनान्नयुक्ता वसुधा तदा स्यात् ॥
वायव्यवाते जलदागमः स्यात्
अन्नस्य नाशः पवनोद्धता च ।
सौम्येऽनिले धान्यजलाकुलाधरा
नन्दन्ति लोका भयदुःखवर्जिताः ॥
ऐशेन वृद्धिर्बहुवारिपूरिता
धरा च गावो बहुदुग्धसंयुताः ।
भवन्ति वृक्षाः फलपुष्पदायिनो
वातेऽभिनन्दन्ति नृपाः परस्परम् ॥

---

१. मयूरचित्रकम् । स० भ० पु० पाण्डुलिपिसंख्या ३४३३२ । पृ० ११-१२ ॥
श्लो० ॥ ७७-८२ ॥

आषाढीयोगोऽयं सम्यक्प्रोक्तो मुनिमतं समालोक्य ।
यज्ज्ञात्वा दैवविदो लोके ख्यातिं समायान्ति ॥

तथैव विषयोऽयं रुद्रयामलान्तर्गते सारोद्धारे ईश्वरपार्वतीसंवादरूपेण वर्णितो मेघमालेति नाम्ना समुपलब्धायां पाण्डुलिप्यामुद्धृतोऽपि लभ्यते। अत्र लिपिकृतः स्वल्पसंस्कृतज्ञत्वादसंस्कृतज्ञत्वाद् वा व्याकरणदृष्ट्या भाषा बहुशोऽशुद्धा। तथा हि—

आषाढीपूर्णिमायां तु पूर्ववातो यदा भवेत् ।
निष्पत्तिः सर्वधान्यानामारोग्यश्च भविष्यति ॥

आषाढ्यामग्निवातश्चेदस्थिशेषा मही तदा ।
आषाढी पूर्णिमायां तु दक्षिणो यदि मारुतः ॥

सकूपेषु तडागेषु तथा निर्झरणेषु च ।
तदा न दृश्यते तोयं देवि देवो नं वर्षति ॥

आषाढीपूर्णिमायां तु नैर्ऋत्यां यदि मारुतः ।
विक्रयित्वा तदा सर्वं कर्तव्यो धान्यसङ्ग्रहः ॥

मासे तु पञ्चमे देवि लाभस्तु द्विगुणो भवेत् ।
आषाढीपूर्णिमायां तु पश्चिमो यदि मारुतः ।
निष्पत्तिः सर्वधान्यानां लोके वर्षति माधवः ।
आषाढीपूर्णिमायां तु वायव्यो यदि मारुतः ॥

नकुलाः शलभाश्चैव मूषकाश्च पतन्ति वा ।
आषाढीपूर्णिमायां तु वायव्यो यदि मारुतः ॥
धर्मशीलास्तदा लोका धनं धान्यं गृहे गृहे ।
आषाढीपूर्णिमायां तु उत्तरो यदि मारुतः ॥

गीतवाद्यरता लोकाः सुभिक्षं प्रबलं भवेत् ।
आषाढीपूर्णिमायां तु चतुर्दिक्षु च मारुतः ॥

१. मेघमाला। सरस्वतीभवनपुस्तकालये पाण्डुलिपिसंख्या ३७२०२। पृ० ४४। श्लो० ४२–५४ ॥

धान्यानि च महर्घाणि वह्निदाहः प्रकीर्तितः ।
आषाढी त्वधिका तस्य समर्घं तु तदा मतम् ॥
संवत्सरो वर्तमानः शून्यो यातः सुनिष्फलः ॥
निर्वातगगना देवि यदाऽऽषाढस्य पूर्णिमा ॥
तदा तु सर्वमेदिन्यां जलं नास्तीति कथ्यते ।
पूर्णिमाऽहर्निशं देवि इन्द्रचिह्नं प्रदृश्यते ॥
अस्तं गच्छति तीक्ष्णांशौ सस्यस्योत्पत्तिरुत्तमा ॥ इत्यादि ॥

वनमालाग्रन्थेऽपि विषयोऽयं विस्तरेण वर्णितो दृश्यते। अत्रापि स्वल्पसंस्कृतज्ञस्यासंस्कृतज्ञस्य वा पाण्डुलिपिकृतत्रुटिवशात् पाठो बहुशः संशोधनार्हः। तथा हि—

[1]शुचिवलक्षदलान्ततमीमुखे
यदि वहत्यनिलो हरिदिग्भवः ।
जलमलं सृजति क्षितिमण्डले
बहु मुदं बहुधा वसुधाभृतः ॥
अनलकोणभवो यदि मारुतो
वहति मन्दजवो रजनीमुखे ॥
वमति भस्म कृशानुशिखाकुला
वदनतः परितोऽपि वसुन्धरा ॥
दिनकरे विकरे परिघट्टयन्
दिवि घनं यदि दक्षिणमारुतः ॥
प्लवति मन्दपयः कणिकामतो
भुवि भयं जनयन् तनुतेऽम्बुदः ॥
असुरकोणभवः क्षणदामुखे
वहति चेदनिलो विजलोऽम्बुदः ॥
अतिकरालकपालकुलावृता
वसुमती रुदतीव विलक्ष्यते ॥

---

१. वनमाला। स० श्री० पु० सङ्ग्रहे पाण्डुलिपि-संख्या ३५३६५। पृ० १–२। श्लो० १२–१९॥

वरुणवायुरिला रजसां कणा-
निकरमुग्रजवो द्रुतमुत्क्षिपन् ॥
वहति चेदभितो धरणीभृतो
भुजबलं सकलं व्रजति क्षयम् ॥
अग्निकोणभवः पवनो यदा
वहति सायमिला विमला भवेत् ॥
अतितरां नवनीरदधारया
फलमया हि तया भुवि पादपाः ॥
सति निशावदने गगने रवौ
अभित उत्तरतः शुचिपर्वणि ॥
वहति मन्दगतिः पवनो धरा
खधरासितवारिधराकुला ॥
दिनपतावपरक्षितिजं गते,
वहति शङ्करकोणभवोऽनिलः ।
वसुमती मुदिता नवशस्यगो-
कुलपदैर्जलदैरभिलक्ष्यते ॥

अत्र वर्णनसाम्यात् स्पष्टमवगम्यते यद् घाघ भड्डरयोः कृतयोऽत्र निर्दिष्टेभ्यः प्राच्यानां नारदादिमहर्षीणां संस्कृतग्रन्थेभ्योऽनूदिता एव सन्ति, न तु मौलिक्यः ।

इत्थमैतिहासिकविवेचनात् सुस्पष्टं ज्ञायते यत् प्राच्यभारतीयम् ऋतुविज्ञान-शास्त्रं वैदिककालादारभ्य आधुनिक-भारतीय-भाषाणां विकासकालं यावत् संस्कृतवाङ्मये महत्त्वावहं स्थानमधिकृत्य अवर्तत ।



## भारतीयर्तुविज्ञानशास्त्रस्य मूलभूताः सिद्धान्ताः—

प्राच्यभारतीयस्य ऋतुविज्ञानशास्त्रस्यास्याधारभूताः सिद्धान्ताः वक्ष्यमाणप्रकाराः सन्ति—

१—मेघानां मारुताश्रितत्वान् मारुत-गतिमधीत्य भाविवृष्ट्यादीनां ज्ञानं प्राप्तुं शक्यते।

२—भुवो वायुमण्डले वायोर्गतिक्रमः सुनिश्चितं पूर्वापरक्रममाश्रित्य वर्तेत इति कालविशेषे दृष्टा वायुगतिः वायोर्भाविनं गतिक्रमं सूचयति। वायुचक्रमेतद् पौषादारभ्य वर्षेण पूर्णं भवति।

३—खमण्डले विद्यमाना ग्रहाः परस्परं प्रभावयन्ति। इत्थं सूर्यादिग्रहाणां प्रभावो न केवलं भूमण्डलीयतत्वेषु परं भुवो वायुमण्डलगतयोर्मेघमारुतयोर्गतिक्रमेऽप्यापतति। अतएव सौरमण्डलीय-ग्रहाणामवस्थानविशेषात्, तेषामुदयास्तमय-गमन-सङ्क्रमण-योगादिभ्यश्च भुवो वायुमण्डले मेघमारुत-स्थितीनां ज्ञानं प्राप्तुं शक्यते।

४—भुवो वायुमण्डले जायमाना मेघमारुतविकृतयः सूर्यचन्द्रयोः प्रकाशकिरणानां मार्गं प्रभावयन्ति। अतः सूर्यचन्द्रमण्डलयोः परितः परिलक्ष्यमाणाभ्यः प्रकृतिविकृतिभ्यो मेघमारुतविकृतीनां ज्ञानं प्राप्तुं शक्यते।

५—मेघमारुतविकृतयो भूमण्डलगतेषु रासायनिक-पदार्थेषु, प्राणिषु, वनस्पतिषु चापि विकृतीरुत्पादयन्ति। अतो भूमण्डलीयानां रासायनिक पदार्थानां, प्राणिनां, वनस्पतीनाञ्च विकृतिभ्यश्चेष्टाभ्यो वा वायुमण्डलगतानि मेघमारुतस्थितिसम्बन्धीनि परिवर्तनानि ज्ञातुं शक्यन्ते।

६—भुवो वायुमण्डले विद्यमानात्तापक्रमाद्, वायोरार्द्रतायाः मात्रातश्च वायुमण्डले वृष्टेः सम्भावनाया ज्ञानं भवति। (अयमेव सिद्धान्तः पाश्चात्याया ऋतुविज्ञानपद्धतेराधारभूतो वर्तते।)

७—मेघानां गर्भकालादारभ्य वर्षणकालं यावत् सुनिश्चितो विकासक्रमोऽनुवर्तते। इदं क्रमचक्रञ्च सामान्यतया सार्द्धषण्मासमितं कालमपेक्षते। क्रमेऽस्मिन् कथञ्चिदपि व्यतिक्रमे जाते चेन्निश्चिते काले वृष्टिरवरुद्धा भवति। तर्हि विकृतो मेघगर्भः पुनः स्वीयमाधानकालमासाद्य करकरूपेण परिणमति।

८—प्रतिसूर्यक-परिवेषेन्द्रधनुर्विद्युदुल्काधिष्ण्याऽशनिनिर्घाततारादयो मेघमारुत मूला विकृतयः सद्योवृष्टेः पूर्वज्ञानं कारयन्ति। विकृतीनामेतासां प्रभावक्षेत्रं प्रभावावधिश्च सुनिश्चिते भवतः।

९—यथा भारतीयपञ्चाङ्गपद्धतौ संवत्सराणां, मासपक्षतिथ्यादीनाञ्च ग्रहगतिमूलकः क्रमः कल्पे कल्पे, युगे युगेऽनुवर्तते तथैव मेघमारुतादीनां गतिचक्रक्रमोऽपि कल्पे कल्पे युगे युगेऽनुवर्तते। अतो भारतीयपञ्चाङ्गमाश्रित्य मेघमारुतयोर्गतिक्रमस्य तयोर्विकृतीनाञ्च ज्ञानं कर्तुं शक्यते।

१०—अत्र वर्णितया प्राच्यभारतीयपद्धत्या निखिलेऽब्दे वृष्टिगर्भस्थितिसूचकानामाकाशलक्षणादीनां पर्यवेक्षणाद् भाविवृष्ट्यादीनां प्रामाणिकं ज्ञानं कर्तुं शक्यते।

एतानेव सिद्धान्तानाश्रित्य प्राच्यभारतीया ऋतुविज्ञानविधय उपकल्पिताः सन्ति।

## उपलब्धयः —

१—संस्कृतवाङ्मये विकीर्णानाम् ऋतुविज्ञानशास्त्रविषयाणामेकत्र सङ्कलनं विधाय विलुप्तप्रायस्य शास्त्रस्यास्य पुनः प्रतिष्ठापनम्।

२—सङ्कलितानाम् ऋतुविज्ञानशास्त्रविषयाणां प्राच्यक्रमेणेव वर्गीकरणं विधाय तेषां वैज्ञानिकं व्याख्यानम्।

३—प्राच्यभारतीया विचारा वैज्ञानिकाः प्रयोगार्हाश्च न सन्तीति प्रवादस्य दूरीकरणम्।

४—प्राच्यभारतीयायाः पौराणिकविचारसरणेर्वैज्ञानिकविचारपद्धत्या सह समन्वयं विधाय तस्या अवैज्ञानिकत्वस्य खण्डनम्।

५—ऋतुविज्ञानस्य प्राच्यभारतीयानां यान्त्रिकविधीनां वैज्ञानिकरहस्योद्घाटनम्।

६—मंत्रयागादीनां विधीनां वैज्ञानिकत्वोपपादनम्।

७—ऋतुविज्ञानशास्त्रान्तर्गतेषु येषु प्राच्य-विषयेषु विचारेषु च आधुनिकानाम् ऋतुवैज्ञानिकानां दृष्टिरद्यावधि न विद्यते तेषां प्राच्यानां विषयाणां विचाराणाञ्च विषये आधुनिकवैज्ञानिकानां दृष्टेरावर्जनम्। तद्यथा—

क—प्राच्यानां वृष्टिगर्भनिष्पत्तिविषयकविचाराणां प्रकाशनम्।

ख—वृष्टिगर्भनिष्पत्तिकालसम्बधिनां प्राचीनविचाराणां प्रकाशनम्।

ग—करकानिष्पत्तिकारणविषये प्राच्यानां मतस्य प्रकाशनम्।

घ—धिष्ण्योल्काऽशनितारानिर्घातपरिवेषप्रतिसूर्यकादीनां वृष्टिज्ञानौपयिकत्वविषयकप्राच्यमतस्य प्रकाशनम्।

ङ—ऋतुविज्ञानदृष्ट्या पशुपक्षि-कीट-वनस्पत्यादीनां वृष्टिसूचकचेष्टानां महत्त्वप्रकाशनम्।

च–ऋतुविज्ञानदृष्ट्या भूमण्डले जायमानानां वृष्टिसूचक-रासायनिकक्रियाणां महत्त्वप्रकाशनम्।

छ–भाविवृष्ट्यादिज्ञानाय प्राच्यैर्निर्दिष्टानां पर्यवेक्षणस्य विशिष्टावसराणामाषाढीपूर्णिमा - रोहिणीयोग-स्वातियोग-ज्येष्ठशुक्ल-पौषारम्भप्रभृतीनां महत्त्वस्याप्रकाशनमित्यादि।

८—प्राच्यभारतीयस्य ऋतुविज्ञानशास्त्रस्यैतिहासिकं विवेचनम्।

९—भारतीयाधुनिकभाषासु तत्तत्प्रान्तेषु कविभिः कृतानाम् वृष्टिज्ञानविषयकाणां संस्कृतग्रन्थानुवादानां मौलिकत्वभ्रमं निरस्य तेषां संकृतमूलस्योपस्थापनम्।

१०- ऋतुविज्ञानशास्त्रस्य प्राच्य-विचारपद्धतेर्विषये गवेषणद्वारस्योद्घाटनम्॥

—: * :—

# उपसंहारः

—:*:—

:०:०:

अद्यावधि विलुप्तप्रायस्य प्राच्यभारतीयस्य ऋतु-विज्ञानशास्त्रस्य विषये प्राच्यानां महर्षीणामाचार्याणाञ्च विचारानत्रोपन्यस्य तेषां प्राच्यदिशा वर्गीकरणं विधाय, वैज्ञानिकं विवेचनं च पुरस्कृत्य आशासे यत् संस्कृतानुसन्धानक्षेत्रे विषयानेतानधिकृत्य वैज्ञानिकदृष्ट्या गभीरं गवेषणं प्रवर्तिष्यत इति। वस्तुतो विषयोऽयं प्रयोगात्मकः, अतो यावत् संस्कृतानुसन्धानक्षेत्रे इत्थम्भूतेषु विषयेषु प्रयोगात्मकं कार्यं न प्रवर्तते तावदेतादृशाणां प्राच्यभारतीयविज्ञानशास्त्राणां महत्त्वं प्रतिष्ठापयितुं न शक्यते। प्रयोगक्षेत्रे चास्मिन् यावत् प्राचीनायाः प्रयोगसरणेरनुसरणं न क्रियते तावत् प्रयोगे साफल्यं न सम्भवति। अतः सर्वमेतद् दृष्टिगतं विधाय शास्त्रेऽस्मिन् प्रयोगपर्यवेक्षणात्मकं कार्यं नूनमारभणीयम्। मन्ये विषयोऽयमनुसंहितो विकसितश्च प्राच्यानां गभीराया वैज्ञानिकविचारपद्धतेः रहस्यमुद्घाटयन् लोकस्य महते कल्याणाय कल्प्यते।

# शुद्धिपत्रम्

| पृष्ठ संख्या | पंक्ति संख्या | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| १ | १३ | यास्मिन् | यस्मिन् |
| ३ | ७ | सहाय्येन | साहाय्येन |
| ३ | १८ | मेघामारुतादीनाम् | मेघमारुतादीनाम् |
| ४ | २३ | हाइड्रोज- | हाइड्रोजन- |
| ५ | ८ | अम्बुककणा | अम्बुकणा |
| ६ | १६ | वायव्यतवत्त्स्य | वायव्यतत्त्वस्य |
| ७ | २२ | षञ्चनवते | पञ्चनवते |
| ७ | २६ | अत्रैबोद्धृतम् | अत्रैवोद्धृतम् |
| ८ | २८ | अत्रैषाद्धृतम् | अत्रैवोद्धृतम् |
| ८ | २६ | बृहत्संहिता | बृहत्संहिता |
| ९ | १५ | वायुविर्ययश्च | वायुविपर्ययश्च |
| ११ | १३ | उत्कयामिहतं | उल्कयाभिहतं |
| १२ | ६ | वृष्टिगर्भोपधातकाना-मुत्पानां | वृष्टिगर्भोपघातकाना-मुत्पातानां |
| १२ | २४ | भट्टोत्यलटीका | भट्टोत्पलटीका |
| १२ | २५ | " | " |
| १३ | २७ | बृहत्संहिता | बृहत्संहिता |
| १४ | २२ | पलञ्चक्षणेभ्योऽपि | पञ्चलक्षणेभ्योऽपि |
| १५ | ३ | रूपेणैकेनः | रूपेणैकेन |
| १६ | २ | क्वचित्त | क्वचित्त |
| १६ | २५ | सद्भिः | सद्भिः |
| २० | २६ | "द्युत दीप्तौ" | "द्युत दीप्तौ" |
| २१ | ६ | विद्यातनं | विद्योतनं |
| २१ | ६ | भावविवृष्ट्यादेः | भाविवृष्ट्यादेः |
| २५ | ७ | इत्थुमुक्ता | इत्थमुक्ता |
| २५ | २० | गजारूढस्ययेन्द्रस्य | गजारूढस्येन्द्रस्य |
| २६ | ७ | द्वयर्थकाः | द्व्यर्थकाः |

| पृष्ठ संख्या | पंक्ति संख्या | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| २७ | ४ | तापप्रमावेण | तापप्रभावेण |
| २७ | ७ | पवनस्याक्रञ्जनप्रक्रियया | पवनस्याकुञ्चनप्रक्रियया |
| २७ | २८ | मेघेषु | मेघेषु |
| २८ | १४ | विद्यत् | विद्युत् |
| २६ | ५ | यत्राणां | यन्त्राणां |
| ३० | १४ | जनितानामुत्पानां | जनितानामुत्पातानां |
| ३१ | ४ | उच्चराकाशे | उच्चैराकाशे |
| ३१ | ४ | जलवाष्ष | जलवाष्पं |
| ३१ | ८ | सूर्ययस्य | सूर्यस्य |
| ३१ | १३ | परिवर्ततानां | परिवर्तनानां |
| ३१ | १७ | सम्बन्धीति | सम्बन्धीनि |
| ३१ | २१ | पौषादरभ्य | पौषादारभ्य |
| ३१ | २६ | पौषादारम्य | पौषादारभ्य |
| ३१ | २८ | वष्टिर्ज्ञाता | वृष्टिर्ज्ञाता |
| ३३ | २५ | पयवेक्षणानः | पर्यवेक्षणानां |
| ३४ | ३ | किञ्जित् | किञ्चित् |
| ३४ | ११ | पूवर्वातस्तदा | पूर्ववातस्तदा |
| ३४ | १६ | वर्षर्तोराम्भात् | वर्षर्तोरारम्भात् |
| ३५ | २० | भवेत | भवेत् |
| ३५ | २४ | आगमगिमनश्चातुर्मासस्य | आगामिनश्चातुर्मासस्य |
| ३५ | २४ | वृष्टे र्ज्ञानं | वृष्टेर्ज्ञानं |
| ३६ | १७ | चतुदिनम् | चतुर्दिनम् |
| ३७ | ३ | पूववदेव | पूर्ववदेव |
| ३७ | २० | मासचतुष्टस्य | मासचतुष्टयस्य |
| ३७ | २० | प्रतिनिध्य | प्रातिनिध्य |
| ३८ | २ | पताकामसतिां | पताकामसितां |
| ३८ | १५ | प्रहरैविकल्प्या | प्रहरैर्विकल्प्या |
| ३६ | ५ | प्रातिनिध्य | प्रातिनिध्य |
| ३६ | ९ | वायुयुंदि | वायुर्यदि |
| ४० | २६ | पञ्चानाडीषु | पञ्चनाडीषु |
| ४२ | ६ | पौर्णामास्यां | पौर्णमास्यां |
| ४२ | ११ | शस्याहानिर्वरुणदिशि | शस्यहानिर्वरुणदिशि |

| पृष्ठ संख्या | पंक्ति संख्या | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| ४२ | १३ | समुलब्धं | समुपलब्धं |
| ४२ | १६ | घूर्णित | घूर्णित- |
| ४४ | २५ | घरा | धरा |
| ४५ | ३ | दैवाविदो | दैवविदो |
| ४५ | १४ | देवो वर्षति | देवो न वर्षति |
| ४६ | १७ | परिघट्टयन् | परिघट्टयन् |
| ४६ | २३ | भयमनवसरवृटयना- | भयमनवसरवृष्टयना- |
| | | वृटयादि | वृष्टयादि |
| ५१ | ८ | मताः | मत्ताः |
| ५२ | २३ | सरीसृपास्तणाग्राणि | सरीसृपास्तृणाग्राणि |
| ५३ | ३ | दुढर्निमपि | दुर्दिनमपि |
| ५४ | ७ | मार्गशीर्षदिषु | मार्गशीर्षादिषु |
| ५४ | ८ | भावृष्टिज्ञानं | भाविवृष्टिज्ञानं |
| ५४ | २५ | गृहमुत्तम् | गृहमुत्तमम् |
| ५६ | ५ | विजनीयाद् | विजानीयाद् |
| ५७ | १२ | पुर्वानुमानम् | पूर्वानुमानम् |
| ५७ | १८ | वृष्टिविषकमनुमानं | वृष्टिविषयकमनुमानं |
| ५६ | ८ | वृष्ठि | वृष्टि- |
| ६० | ५ | नवभ्यां | नवम्यां |
| ६३ | २५ | प्रजापते | प्रजायते |
| ६३ | २६ | व्रातैः | व्रातैः |
| ६४ | २२ | महेर्षेः | महर्षेः |
| ६६ | २४ | उद्यास्त | उद्यास्तमय |
| ६६ | २७ | ,, | ,, |
| ६७ | १० | उद्यास्ताभ्यां | उद्यास्तमयाभ्यां |
| ६७ | ११ | शुक्रास्तस्य | शुक्रास्तमयस्य |
| ६७ | १२ | बुधास्तस्य | बुधास्तमयस्य |
| ६८ | १७ | शुक्रास्तकालिक | शुक्रास्तमयकालिक |
| ६९ | ८ | शनेरस्तकालिक | शनेरस्तमयकालिक |
| ७० | २ | बुधास्ताभ्यां | बुधास्तमयाभ्यां |
| ७० | ३ | ,, | ,, |
| ७२ | २४ | गहसञ्चाराणाञ्च | ग्रहसञ्चाराणाञ्च |

| पृष्ठ संख्या | पंक्ति संख्या | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| ७३ | १६ | ग्रन्थस्यैका | ग्रन्थस्यैका |
| ७४ | ८ | हृद | ह्रद |
| ७४ | १६ | वाषिक | वार्षिक |
| ७८ | १४ | पुरस्तात | पुरस्तात् |
| ७९ | ६ | वृष्टयादि | वृष्ट्यादि |
| ७९ | १९ | वृष्टयादेः | वृष्ट्यादेः |
| ८० | २४ | छिन्नमूलश्च | छिन्नमूलाश्च |
| ८२ | १४ | वृट्यादि | वृष्ट्यादि |
| ८५ | ८ | द्रहिण | द्रुहिण |
| ८७ | २० | गैष्मिक | ग्रैष्मिक |
| ८९ | २२ | विघ्वंस | विध्वंस |
| ९५ | २ | सङ्क्रान्तिवारिवधौ | सङ्क्रान्तिवारविधौ |
| १०१ | १४ | सुलभधान | सुलभधान्य |
| १११ | ३ | किञ्चित्कालात् | किञ्चित् |
| १११ | ५ | संस्कृतग्रम्थेषु | संस्कृतग्रन्थेषु |
| १११ | २० | वृक्षलतादश्च | वृक्षलतादयश्च |
| ११३ | ७ | वेददम्बु | वदेदम्बु |
| ११३ | ९ | द्रतमम्भः | द्रुतमम्भः |
| ११३ | ११ | गोनयाभमलं | गोनयनाभमलं |
| ११४ | ३ | लपति | लपन्ति |
| ११६ | १३ | रुद्रायामलोक्तानि | रुद्रयामलोक्तानि |
| ११७ | ७ | पर्यवेक्षणनि | पर्यवेक्षणानि |
| ११७ | २० | सप्ताहात | सप्ताहात् |
| ११८ | २ | किञ्जिल्काभा | किञ्जल्काभा |
| ११९ | २४ | महद्वष | महद्वर्ष |
| १२० | १० | परिघादयोऽपि | परिघोदयोऽपि |
| १२१ | १९ | प्रभावक्षेत्रम | प्रभावक्षेत्रम् |
| १२३ | २० | वृष्टेर्ज्ञानार्थं | वृष्टेर्ज्ञानार्थं |
| १२३ | ,, | प्राच्यै | प्राच्यैः |
| १२५ | २ | पर्यवेक्षम् | पर्यवेक्षणम् |
| १२७ | ८ | देवशि | देवेशि |
| १२७ | १७ | गर्भलक्षम् | गर्भलक्षणम् |

| पृष्ठ संख्या | पंक्ति संख्या | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| १२६ | ६ | परीक्षणीयम | परीक्षणीयम् |
| १३१ | १६ | सविन्द्युमेघ | सविद्युन्मेघ |
| १३३ | १३ | पञ्चमषीष्ट्यः | पञ्चमीषष्ठ्यः |
| १३४ | ६ | वषते | वर्षते |
| १४६ | १२ | शक्ल | शुक्ल |
| १५० | ११ | शुभादास्तदा | शुभदास्तदा |
| १५१ | १५ | मेदिनीम | मेदिनीम् |
| १५३ | २० | वहूदक् | वहूदक |
| १५५ | १५ | अभ्रादिकैर्भभवति | अभ्रादिकैर्भवति |
| १५८ | ७ | अधमतमाधमध्यमहद्दति | अधमतमाधममध्ममहद्दति |
| १५६ | २ | मेघनाला | मेघमाला |
| १६२ | २३ | दुर्भिक्षं | दुर्भिक्षं |
| १६२ | २५ | किञ्चेत् | किञ्चित् |
| १६३ | २५ | ऋक्षैगभस्रावो | ऋक्षैर्गर्भस्रावो |
| १६४ | १५ | वृष्टि | वृष्टि |
| १६५ | २२ | मुनिर्भिवृष्टि | मुनिभिर्वृष्टि |
| १६८ | २४ | लक्षीनि | लक्षणानि |
| १७० | २० | वणितानि | वर्णितानि |
| १७३ | १७ | शलाघ्यो | श्लाघ्यो |
| १७३ | १८ | दुर्भिक्षं | दुर्भिक्षं |
| १७४ | ८ | चतस्रो | चतस्रो |
| १७७ | ५ | षांसु | पांसु |
| १७७ | २१ | प्रतिपादि | प्रतिपदि |
| १८१ | २२ | शुम्भुना | शम्भुना |
| १८७ | ११ | विजनीयात् | विजानीयात् |
| १९४ | ४ | बूदं | बूंद |
| १९६ | ७ | यान्नोत्तिष्ठते | यावन्नोत्तिष्ठते |
| १९७ | १३ | प्रथभे | प्रथमे |
| २०२ | १० | श्रावणे | भाद्रे |
| २१५ | १६ | मेघमेदा | मेघभेदा |
| २१७ | १ | भावकतूहल | भावकुतूहल |

—❀—